श्रीशंकराचार्यचलचित्रे भारतभूषणः पितृभूमिकायाम् अष्टवर्षदेशीयशंकरेण सह ।



संस्कृतस्य सचित्रमासिकम्, — शिमला — अक्तूबर, १९८४

नववर्षस्य चलचित्रविशेषांकः

शंकराचार्यसंस्कृतचित्रपटनिर्माता निर्देशकश्च श्री जी. वी. अय्यरः भिन्नासु चतुर्षु मुद्रासु ।

# विषयानुक्रमः


| सं० | विषयः | | लेखकः | | पृष्ठ |
|---|---|---|---|---|---|
| १. | मुखपृष्ठकथा: | ... | प्रधान सम्पादकः | — | १ |
| २. | चलचित्रसमीक्षा | — | डा. श्री धर्मानन्द शर्मा | — | ५ |
| ३. | दीपावली | — | संस्थापकाः | — | ६ |
| ४. | हि. प्र. संस्कृतस्य प्रसार.... | — | प्रो, केशव शर्मा. | ... | ९ |
| ५. | साहित्य सरिता | ... | कार्यालयस्यालोचना वि. | ... | २१ |
| ६. | हि. प्र. सं. शि. परिषद् | — | श्री प्रेमलाल शास्त्री महामन्त्री | ... | २३ |
| ७. | पाठशाला छात्रेभ्यः | — | ... — | ... | २५ |
| ८. | समस्यापूर्तिः | — | आचार्य शुकदेव शर्मा नाभा | — | २६ |
| ९. | गणतन्त्रसरणिः | ... | डा. शिवदत्त शर्मा चतुर्वेदः | — | २७ |
| १०. | शेक्सपीयरसोनेटरूपान्तरम् | — | प्र० सम्पादकः | | २९ |
| ११. | अभिनन्दनम् | — | | ... | ३७ |
| १२. | हि. प्र. सं. शि. परिषदो निर्वाचनम् | ... | | — | ३८ |
| १३. | मे कर्मचारिशकटम् | ... | श्री लोकनाथ मिश्रः, निर्मण्ड (हि. प्र.) | — | ३९ |



संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, दूरभाष : 3859

प्रधान सम्पादक :— प्रा० केशव शर्मा, शास्त्री, एम. ए., एम. फिल, ,, 8-200

दिव्यज्योतिः कार्यालयः भारती विहार, मशोबरा-७

मुद्रक :—

भारती मुद्रणालय भारती विहार, मशोबरा-१७१००७

शिमला (हि. प्र.) स्वामी :- श्रीमती रत्नकुमारी आचार्य

अक्तूबर १९८४—कार्तिक २०४१ अङ्क १ — मूल्यम् २० रु०

वर्षम्...२८

मुखपृष्ठकथा :-

# आदिशंकराचार्यः

# संस्कृतस्य प्रथमं चलचित्रम्

अस्य संस्कृतचलचित्रस्य निर्देशकः जी. बी. अय्यरः प्रायेण नग्नपादश्चलति । संस्कृतभाषायामिदं प्रथमचलचित्रम् । अस्य चलचित्रीकरणं केरलस्य मन्दिरसमीपेषु क्षेत्रेषु १९८१ ख्रीष्टाब्दस्य अगस्त्यमासीये १३ दिवसे समारब्धम् । अस्मिन्नेव दिने चलचित्राकर्षकयन्त्रभ्रमणं जातम् ।

जी. बी. अय्यरः-चित्रप्रारंभकाले न कमपि मुहूर्तं न चापि कामपि पूजामकरोत् यतोहि स स्वकलासाधनामेव स्वपूजां मनुते । तथापि 'मडथिल्लेइलम्' स्थानीयमन्दिरपुजारिभिराकस्मिकपूजाऽस्मिन् - दिने तत्र कृता या तेषामनुसारमावश्यका आसीत् । त एव च प्रथमा दर्शका आसन्नस्य संस्कृत-चलचित्रनिर्माणारम्भकालस्य ।

परन्तु अस्य सुदिनस्यारम्भात पूर्वमेव १९७८ ख्रीष्टाब्देआदिशंकराचार्य-संस्कृतचलचित्र-निर्माणभूमिकाऽरब्धाऽऽसीत् एतच्च तद्दिनमासीद्यदा अस्य श्मश्रुधारिणा निर्देशकेन 'हमसगीथे, इति चलचित्रनिर्माणाय भारतीय-चित्रपटक्षेत्रीयं सर्वोच्चसम्मानं स्वर्णकमलमवाप्तमासीत् । इदं कन्नडचित्र-पटमासीत् । अस्य चलचित्रस्य निर्माणं श्री अय्यरेण नवाभिनेतृवर्गस्य एवमेव चानुभवहीनप्रकृष्टविधिज्ञानां साहाय्येनैवानेन विहितम् तथापि स्वयमय-मनुभवी तस्माच्च जानाति कथं तेभ्यः—कार्यं कारणीयम् ।

70

सम्भवत इदमेव कारणं स्याद्यत कन्नडचलचित्रनिर्माता श्री बी. एस. रंगा पुस्तकमेकं गृहीत्वा १९७८ ख्रीष्टाब्देऽस्य पार्श्वमागतः प्रार्थयामास चैनं आदिशंकराचार्यमभिलक्ष्य चलचित्रकथापाण्डुलिपिनिर्माणाय । अयमपि कार्यमिदमुत्सुकतया स्वीकृतवान् । अनेन यत् किमपि – अस्य वेदान्तसिद्धान्त-संस्थापकस्य परन्तु जगति न तथा प्रसिद्धस्य यथा किल एवंविधसिद्धान्त-संस्थापका अपरधर्माणां प्रसिद्धिमापुः—जीवनविषये कार्यविषये चोपलब्ध-सामग्रीजातमेकत्री कृतम् । षोडशप्रतिलिपयः विभिन्नाः श्री शंकरजीवन-सम्बन्धिन्यः समन्विष्टाः—अधीताः । परन्तु जनश्रुतिसमूहमतिरिच्य न किमपि तादृशमवाप्त क्वापि देशे यदैतिहासिकं तथा प्रमाणरूपेण गृहीतं स्यात् ।

कस्मिन् शतकेऽयं महापुरुषो भारतभूवं स्वजन्मनाऽलचक्रे इति स्पष्टयितुं न किमपि प्रमाणं लिखितं प्राप्यते। एकस्य जीवनवृत्तपुस्तकस्याधारेणाय ईसातः पूर्वमभूत् । अपरञ्चैतिहासिकानुमानमस्ति यदयं अष्टमशतके ईसातः पश्चात् – अभूत् । एवं किलास्य स्थितिस्तु सुस्पष्टा नास्ति इति अय्यरः स्वकीयानुसन्धानानुसारं कथयति यदत्र एकमत्यमस्ति यदसौ द्वात्रिंशद्वर्षपर्यं-न्तमेव जीवितः, स केरलेषु जन्माग्रहीत् हिमालये चादृश्यतां प्राप्तः इतः पूर्वञ्च तेन भारतस्य परिपूर्णतया यात्राद्वयं कृतम् । सनातनधर्मस्तदानीं लुप्यते स्म तद्रक्षायै अनेन निखिलेऽपि भारते वेदान्तसिद्धान्तप्रचारः कृतः सनातनधर्मश्च रक्षितः ।

## कथं संस्कृते एव चित्रपटम्

सर्वमिदमनुसन्धानं कृत्वा श्री अय्यरेण सर्वप्रथममयं निर्णयो गृहीतः-यदिदं चलचित्रं संस्कृतभाषायामेव भवेत् । यः किल संगीतमयमेव पूर्णचित्रं विनि-र्मितवान्, स यदि संस्कृते चलचित्रनिर्माणनिर्णयं गृह्णाति तु नात्र-आश्चर्यः । या भाषा अद्य संस्थापर्यन्तमेव प्रचलति तस्यां चलचित्रनिर्माण कथं युक्तं स्यादिति प्रश्ने सति – एवमस्ति - उत्तरं यदसौ कामपि तादृशीं भाषां न प्राप्तवान् या किल शंकराचार्यकाले सर्वत्र भारते व्याप्ताऽभविष्यत् अतः संस्कृते एव आदिशंकराचार्यचलचित्रनिर्माणं सर्वथा युक्तम् । आम् - अत्र स स्वीयामपि शैलीमुद्भावयामास या किल प्राचीनसंस्कृतसाहित्येऽपि वर्तते यथा चौराः मलयालमभाषायां प्रयागस्थाः भक्ताः हिन्द्यामुतान्ये सर्वेऽपि पठिताः जनाः संस्कृते एव वदन्ति चलचित्रे । चत्वारोऽपि वर्तमानाः शंकराचार्याः पाण्डुलिप्यै आशीर्वादान् - व्यतरन् एवं च पाण्डुलिपिः पूर्णाः ।

परन्तु श्री बी. एस. रंगा यः निर्माता आसीदत्र च येन आदिशंकराचार्य-चलचित्रनिर्माणविचारः प्रदत्तः स एव संस्कृते चलचित्रनिर्माणस्य सर्वथा

विरोधमकरोत् । "राष्ट्रीयचलचित्रविकासनिगमः (के. एफ. डी. सी.)यः प्रथममेव आर्थिकरूपेण हानिमेव प्राप्नोति — संस्कृते चलचित्रनिर्माणाय सन्नद्धो नाभूत् । अय्यरः स्वयमेव चलचित्रमेनं संस्कृते निर्मास्यति एतदर्थमपि निगमः सहभागित्वं न स्वीचकार । राष्ट्रीयचलचित्रविकासनिगमस्य प्रमुखाधिकारी तथा च पत्रकारः अनिलधरकरः परिपूर्णशक्त्या: संस्कृतचलचित्रनिर्माणयोजनाया घोरविरोधमकरोत् । असौ सनिश्चयं प्रत्यपादयत् - यत् संस्कृतचित्रपटदर्शकः एकोऽपि न मिलिष्यति चित्रपटश्च कक्षान्निक्षिप्तः— व्यर्थमेव नष्टः भ्रष्टश्च भविष्यति । श्री अय्यरः १६ मिलिमित्रेषु (16 M. M.) आकारे चलचित्रमेनं निर्मातुमपि सज्जोऽभवत् । ततोऽपि रा. च. चि. वि. निगमः– प्रातिभाव्यं (Guarantee) ययाचे । तदा अय्यर महोदयः तेलगु, तमिलहिन्दी - चलचित्रस्य 'हंससगीथे, इत्यस्य राष्ट्रीयपुरस्कारविजेतुश्चलचित्रस्याधिकारान् स प्रातिभाव्येनार्पयितुं सन्नद्धस्तदपि निगमेन न स्वीकृतम् । निगमेन चायं भाषादुराग्रहविषये स्वविचारान् परिवर्तयितुमुक्तः । अर्थात् चलचित्रनिर्माणमन्यभाषायां कार्यं संस्कृतभाषा त्याज्या । यथाकथञ्चित - पाण्डुलिपिः समित्या: पारिता ।

इतश्च अय्यरः कथं संस्कृतभाषाविषयकविचारान् – परिवर्तयितुं सन्नद्धोऽभविष्यत् स तु चलचित्रनिर्माणं केवलं दर्शकानां कृते एव न कुरुते । व्यापारिक-चलचित्रनिर्मातारोऽपि पूर्णतः केवलं दर्शकानामेव कृते न तन्निर्माणं कुर्वन्ति, श्री अय्यरः अद्य कथयति, "परन्तु - अहं पूर्णतो विश्वस्तोऽस्मि यन्नवीना नूनमेव कदाचिदिदं चित्रमवलोकयिष्यन्ति यदि पुराणा नावलोकयेयुः, यतोहि तेषु - उत्सुकता वर्तते । भाषाया नास्ति कोऽपि प्रश्नः । विषयः प्राथम्यं भजते ।"

१९८१ खीष्टाब्दे नवदिल्लयां सञ्जाते अन्ताराष्ट्रियचलचित्रमहोत्सवे रा. च. च वि. निगमस्य पदाधिकारिणः अय्यरमहोदयं प्रापुः अस्य कृते च केवलं ६.७३ लक्षमितधनराशिव्यवस्था कृता ऋणरूपेण च प्रदत्ता ।

○

परन्तु - अय्यरमहोदयेन तु स्वीकृतितः एकवर्षपूर्वमेव चित्रनिर्माणकार्यमारब्धमासीत् १९८० खीष्टाब्दस्य जनवरीमासे बैंगलोर चलचित्रमहोत्सवे स आदिशंकराचार्यभूमिकापात्रान्वेषणे संलग्नः प्रतिभाशालिः, सुन्दरः, गम्भीरः प्रसन्नश्च एवंविधमुखमण्डलसमीक्षणोऽसौ व्यस्तोऽभूत् । तत्र विशालजनसम्मर्दे स एकैकशः निरीक्षितुमारेभे । चलचित्रदूरदर्शन संस्थानम् (F.T.I.) पूनातः स युवकमेकं गृहीतवान् । सर्वप्रथमवार्तालापश्चोभयोरेवं प्रारभत :—

"युवक ! अपि जानासि माम् ! एतच्छ्रुत्वा भीतः एस. डी. बेनर्जी नामकः उत्तरं ददौ—"नैव श्रीमन्, नाहं तत्रभवन्तं जाने ।" "किमु त्वया "हंससगीथे,

इति चित्रं दृष्टं स्वीये पूनास्थ चलचित्रसंस्थाने ?" "आम् दृष्टं मया, रोचते च मे तत् ।" "अस्तु, तर्हि अहमस्मि तस्यैव चित्रस्य निर्देशकः, मदीया इच्छा वर्तते यद्भवान् मम नूतनचित्रेऽभिनेष्यति मदर्थम् ।"

त्रयोविंशतिवर्षदेशीयः युवा स्तब्ध आसीत् । प्रथमं स विश्वासमेव नाकरोद्यत् तेन किमिदं सत्यं श्रुतमपि । स त्वरया स्वीकृतवान् किं नहि नूनमेवाहं करिष्यामि । अय्यरमहोदयेनायं युवा साऽवलोकितः । पूनास्थ-संस्थानप्राचार्यश्च प्रसन्नः आसीद्यत् अयं बालः संस्थानं त्यक्ष्यति । एकवर्षो-परान्तमस्याश्चर्यंकारिसम्मेलनस्य पश्चात् - अय्यरमहाभागेन स्वीया प्रतिज्ञा पूरिता एस. डो. बैनर्जी च युवा शंकराचार्यरूपेण स्वचित्रे संस्थापितः ।

हिन्दी चित्रपटस्य प्रसिद्धोऽभिनेता भारतभूषणः शंकराचार्यपितृपादानां भूमिकां निर्वोढुं प्रेरितः । श्री अय्यरः स्वकीयाभिनेतृभिः (स्त्रीपुरुषैः) साकं स्पष्टतया व्यवहरति ।

न किमपि वेतनं मिलिष्यति, परन्तु भवतां व्ययोपरि पश्चान्नूनमेव विचारयिष्यते । एवमेव शंकरस्य मातुः भूमिका निर्वहणाय सुश्री एल. वी. शारदा उक्ता—"न किमपि वेतनं परन्तु व्ययोऽवश्यं दास्यते ।" सापि सहर्षं प्रार्थनां स्वीचकार । इयं सूची किल विशाला । टी. एस. नागाभरणन्, नारायण राओ, मधु अम्बत आदयः ।

## पादपीड़ा अधस्तादेव च निर्देशनम्

चित्रनिर्माणस्य प्रथमचरण एवासीत् कर्णाटकस्य उडुपीक्षेत्रे तीक्ष्ण पाषाणखण्डेभ्यः पादरक्षार्थं श्री अय्यरः समस्तसमूहेन चरणया किमपि धारणार्थं प्रार्थितः । सर्वाग्रहेणातीव काठिन्येन स पादयोश्चप्पलयुगमधारयत् । परन्तु अपरस्मिन्नेव दिने पपात । पादास्थस्खलनं जातम् । ततः उपविश्य एव तत्र निर्देशनमकरोत् पीड़ायाश्च घोराया न कामपि गणनामकरोत् । शंकराचार्यस्य बाल्यभूमिकानिर्वहणाय पात्रान्वेषणे महत्कष्टं जातम् । अति कष्टेन प्राप्तः अष्टवर्षदेशीयो बालः स युक्त आसीत् ।

— —

पञ्चाशद्दिवसेषु आदिशंकराचार्यचित्रस्य चित्राङ्कनं अष्टमासीयेन दीर्घकालेन पूर्तिंगतम् । देशस्योत्तरीयभागेऽधिकः कालः संलग्नः भारतभूषणः तथा शारदा सदृशाः प्रसिद्ध-अभिनेतारोऽपि दुर्गममार्गेषु केवलं बसयानेनैव यात्रामकार्षुः । अय्यरमहोदयेन साकं कार्यकरणे सुप्रतिष्ठिता अभिनेतारोऽपि धनलोभं विहायापि गौरवमनुभवन्ति । यदा आदिशंकराचार्यचित्रस्य कार्यकर्तारः—हिमालयमभिजग्मुस्तदापि - एतेषां पार्श्वे न कान्यपि विशिष्ट-साधनान्यासन् । तथापि मन्द मन्दं चित्रमिदं श्री गणपति वेंकटरामन् - अय्यरस्य सप्तवर्षीयप्रयासैः अकथनीय-असहनीयकष्टैश्च पूर्तिं गतमिति कस्य वा संस्कृतजनस्य प्रमोदाय, हर्षाय वा न स्यात् । — सम्पादकः

# चलचित्रजगति नूतनोपक्रमः आदिशंकराचार्यः

चलचित्रस्योपयोगिता नेदानीं कस्यापि तिरोहिता ।। नाद्य कापि क्षेत्रीयभाषा यस्यां चलचित्रं नावलोक्यते । न चलचित्रनिर्माणं सर्वथा सुकरम् । महार्घः खलु तत् क्षेत्रीयभाषायां तु चलचित्रनिर्माणं राज्यसर्वकारस्य सहयोगं विना न कथमपि सम्भवम् । देवभाषामधिकृत्य 'आदि शंकराचार्य' इति चित्र नूनमभिनवः सुतरां श्लाघ्यो हि प्रयोगः । प्रयोगविज्ञानेनाभिव्यञ्जनया युगानुरूपसन्देशप्रदानेन चेदं बहुधा प्रशस्यते ।

चलचित्रेऽस्मिन् सन्यासधर्मावलम्बिनो देशधर्मयोरात्यन्तिकविकासाय साक्षात्कर्तव्यता संदर्शिता तथा च मठानां मठाधीशानां च सुतरां नैरर्थक्यमुपदर्शितम् । कृतश्चास्पृश्यतायामन्धविश्वासेऽपि सुतीक्ष्णः सफलः प्रहारः ।

चलचित्रस्य पटकथा कल्पनाकलाकुशलेन कन्नडवास्तव्येन सुप्रथितेन कलादक्षेण यशस्विना जी. वी. अय्यरमहाभागेनोपकल्पिता । सप्तवर्षावधि यावत्तेन मनस्विना ऽनवरताध्यवसायेन कथावस्तुन ऐतिह्यप्रमाणं संगृहीत्वा तस्य वैज्ञानिकत्वमनुचिन्तितम् । नीतश्च तेन तत्कृते वर्तमानपीठाधीश्वराणां चतुर्णां जगद्गुरुशंकराचार्याणामन्येषां च विदुषामितिहासविदां च भूयान् सहयोगः ।

आदिशंकराचार्यस्य भूमिका पूनाचलचित्र शिक्षणसंस्थानस्य तरुणस्नातकेन एस. डी. बनर्जीमहाभागेन सजीवाभिनयचातुर्येण निपुणं निर्वोढा चलचित्रदर्शकाणां चिरपरिचितो लोकप्रियो नायको भारतभूषणोऽपि शंकराचार्यस्य पितृभूमिकायां साधु शोभते । सुप्रसिद्धेन छायाकारेण मधु अम्बतेनास्य छायाङ्कनं दाक्षिणात्येनैव सङ्गीतमर्मज्ञेन बालमुरलीकृष्णेन च सङ्गीतरसविधानं विहितम् ।

चलचित्रस्य छायाङ्कनं कालड़ीतः केदार - बद्रीखण्डस्य हिमसानुषु सम्पन्नम् । आसीदस्य छायाङ्कनं नितरां दुष्करम् । पूर्वाभ्यासावसरेष्वपि कौपीनमात्रगोपित गात्रेण हिमशिखरेषु हिमशैत्यभामीरथ्यां होरां यावन्निमज्जनं तथापि च देशधर्म चिन्ता-

( शेषः ८ पृष्ठे )

सं० शोधसंस्थानसंस्थापकाध्यक्षाणां
पू० पा० श्रीमदाचार्यमहाभागानां

# दीपावली—विश्वमङ्गलकामना

हिमाचलसुता सेयं शिवस्याङ्गविभूषणा ।
ज्वालामुखी परा भीमा वीरभद्रप्रसेविता ॥
दीपावली महत्पुण्या भारती वाक् सरस्वती ।
मनुष्यता - प्रबोधाय विश्वमङ्गलहेतवे ॥
दुःख – दारिद्र्यनाशाय सर्वजीवसुखाय च ।
निरासायाज्ञानराशे र्भासतामनिशं भुवि ॥

शिवाकांक्षी-
(आचार्य दिवाकरदत्त शर्मा)

संस्कृत शोध संस्थानम्
भारती विहार, मशोबरा,
शिमला–७
दूरभाषः–8200
3859

# May Deepawali brighten the world With prosperity & Happiness

The divine light-line is the symbol of Parvati, the wife of Shivaji and Shiva is the Symbol of world-welfare The welfare is always full of Shine. This light is called JWALAMUKHI and Bhima and with somany other names. Bhima is always served by the great Gana Virbhadra.

Thus this Deepawali the Symbol of the Great World-mother may bring brightness, happiness and prosperity to you all and the world.

Sanskrit Shodh Sansthanam
Bharati Vihar, Mashobra
S H I M L[A]- 171007

*W. W.*

*Acharya Diwakar Dutt Sharma*

चटुलया मुखमुद्रया गम्भीरधीरभावाभिव्यञ्जनं नूनं सर्वेषां न सुकरम् दुःसाध्यमप्येत-त्कार्यजातं न निर्विघ्नं सम्पन्नम् । दुर्गमपर्वतशिखरादेकस्मात्सहसा स्खलनाज्जातः निर्देशकमहोदयस्य तीक्ष्णः पादप्रहारः । सततसाधनविरले स्थाने मूर्च्छित अय्यरमहाभाग होरान्तरे चेतनामभजत् ।

संस्कृतवद्धा हि सर्वसंवादाः । पात्राणामुच्चारणं च नितान्तं विशुद्धं भावानुरूपं च । महता परिश्रमेण निर्मितेऽपि चलचित्रे कलाकारैः किमपि तदनुरूपं पारिश्र-मिकत्वेन नाधिगतम् । नूतनोपक्रमोत्साह एव तेषां कर्मण्यत्र प्रवृत्तिहेतुरिति जयन्ति ते सर्वे ।

सुप्रथितस्य दाक्षिणात्यचलचित्रनिर्मातुः श्री के. बालाचन्दरस्याध्यक्षतायाँ निर्णायकमण्डलेन माघमासस्य दशतारिकायां 'आदिशंकराचार्यं' इति चलचित्र १९८३ ईसवीयचित्रेषु सर्वश्रेष्ठं कथाचित्रमुद्घोष्य पुरस्कृतम् । चलचित्रेणानेन पञ्चराष्ट्रीयाः पुरस्कारा अध्यधिगताः । अस्य पटकथा छायाङ्कनं ध्वनिसंयोजनञ्चापि पुरस्कृतम् । नूनमपरोऽपि प्रयोगोऽत्र प्रतीक्ष्यते एतादृशः संस्कृतानुरागिभिः ।

डा. धर्मानन्द शर्मा

## निवेदन

यद्यपि दिव्यज्योतिः संस्कृतमासिक सभी पाठकों को सेवा में प्रतिमास भेजा जाता है । कभी २ विशेषाँक के रूप में दो मासों का भी इकठ्ठा छपता है । अतः पाठकों को अङ्क संख्याएं पूरी की जाती है । कोई अङ्क यदि प्रकाशित नहीं होते कभी तो उनकी सूचना दी जाती है । तो भी यदि कोई अङ्क बीच में नहीं मिलता तो वह कहीं डाकखाने में गुम हो जाता है । अतः पुनः अङ्क भेजने को कार्यालय को लिखना चाहिए । परन्तु वर्षोपरान्त यदि कोई वा. शु. याचना पर यह कहे कि हमें तो वर्ष भर में एक ही अङ्क मिला है तो यह उचित नहीं । आप सभी के सहयोग से हम अपनी ओर से भी पूर्ण सहयोग इस में देकर इसे चला रहे हैं । अतः अपने इस पत्र की समृद्धि के लिए कार्य करने के लिए हम आप सभी पाठकों, शुभचिन्तकों से निवेदन करते हैं ।

— सम्पादक

# हिमाचलप्रदेशे संस्कृतस्य प्रसारो विकासश्च

## १

### हिमाचल प्रदेश:

हिमाचल: हिमालयो वा समानार्थकशब्दौ । तथापि - अद्य हिमाचल-शब्दस्य प्रयोग: सीमितार्थं व्यनक्ति हिमालयश्च समस्तहिमशृंखला-वाचकोऽद्य जात: । हिमालये निखिलोऽपि भाग: - यत्र यत्र हिमानि सन्ति-गण्यते । एवं सति च पार्वत्यप्रदेशा: हिमालये प्रायेण विलीयन्ते परन्तु हिमाचलशब्दोऽद्य वर्तमान – हिमाचलप्रदेशस्य राजनैयिकसीमापर्यन्तमेव सीमित: । अस्यायमाशयो न वर्तते यत् - संस्कृतस्य सम्बन्ध: केवलं वर्तमानहिमाचलप्रदेशस्य सीमापर्यन्तमेव सीमित: । संस्कृतभाषा तु विश्वभाषाजननी तासां प्राणभूता च वर्तते । हिमालयसीमासु तु संस्कृतं प्राकृतिकरूपेण विकीर्णम् । तथापि पुस्तकेऽस्मिन् राजनयिकसीमासु बद्धस्य हिमाचलप्रदेशस्यैव विषये तथा च संस्कृतभाषाविषये लेखनीं व्यापारयाम: ।

हिमाचलप्रदेश:—उत्तराखण्डस्यैकभाग: । अस्मिन् ऋषीनां मुनीनाञ्चाश्रमा:—आसन् । नात्र कोऽपि सन्देह: वर्तमानहिमाचलप्रदेशे व्यासपुरे (वर्तमान बिलासपुरम्) व्यासाश्रमस्तत्प्रमाणभूता च व्यासगुहा - अद्यापि सर्वं सत्यापयति । इत्थमेव वर्तमानमण्डीमण्डलमध्ये शुकवाटिका शुकेत (सुकेत) नाम्ना प्रख्याता । माण्डव्यऋषे:-नाम्न: मण्डी-इति नामकरणं मण्डीमण्डलस्य जातम् । कुलूतशब्दात् कुल्लूमण्डलस्य नामकरणम् । जमदग्नि-ऋष्यशृंग-मनुपरशुरामादीनामथ चानेकेषां ऋषिमुनीनां, संसारस्य प्रथम-मूर्तिपूजायाश्च विषया: हिमाचलप्रदेशलोककथासु लोकगीतेषु च विकीर्णा: प्रदेशस्य ऋषिभूमित्वं वेदोद्गमस्थानत्वञ्च प्रकटयन्ति ।[१] मातु: रेणुकाया

———

१ कुलूतदेश की कहानी । लेखक लालचन्द्र प्रार्थी । संस्करण ? नीलकमल प्रकाशन, कुल्लू (हि० प्र०)

आश्रम दर्शनमद्यापि रेणुकासरोरूपेण प्रदेशस्य शिरमौर मण्डले जायते। एव विष-ऋषिमहर्षि - सेवित प्रदेशस्य कृते यदि गीतायां "स्थावराणां हिमालयः" लिखितमथवा कालिदासेन "अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः पूर्वापरौ तोयनिधीवगाह्य स्थितः पृथिव्या इव मानदण्डः।" इति कुमारसम्भवकाव्यारम्भे निर्दिष्टं तत सर्वथा साधुरेव । एवं विधां-प्रदेशेन साकं संस्कृतस्य कश्चित् सम्बन्धो न भवेदिति वा कथं सम्भाव्येत। यद्यपि पारतन्त्र्यस्यान्धकारे, दासताया घोरनिशातिमिरेषु बाऽसंख्यानि-ऐतिहासिकतथ्यानि प्रचलितानि सन्ति तथापि अहं स्वयमेकेन तादृक -परिवारेण सह सम्बद्धोऽस्मि यत्र गतेषु षट • पुरुषेषु संस्कृतमासीत । मदीयवृद्ध-प्रपितामहश्च वैद्यराट् पञ्चाननमहाभाग: कतिपय प्रसिद्धसंस्कृतक्षत्रीय-विद्वांसः—निर्ममे, तान् ज्योतिष, कर्मकाण्ड चाध्यापयामास, कांश्चन वैद्यकं पाठयामास । कथनस्यायमाशयः – यत पारस्य - आँग्लादिशासने-भ्योऽपि - यत्र संस्कृतनिरासाय षड्यन्त्रपूर्णानि कार्याणि सन्ततम्भवन्ति स्म–संस्कृतरक्षायै प्रदेशस्यास्य जनैः पण्डितैः :— विद्वाद्भिश्च संस्कृतरक्षा कृता संस्कृतस्य प्रचारे प्रसारे च तदानीमपि यथाशक्तिः सहयोगोऽदायि ।

## संस्कृतशिक्षा:

वर्तमानहिमाचलप्रदेशस्य कांगड़ा क्षेत्रे कतिपयाः संस्कृतविद्यालयाः-आसन् - इति श्रूयते परन्तु स्वतन्त्रताप्राप्तिपूर्वमेव ते शनैः शनैः विलयं गताः । प्रदेशोऽयं स्वतन्त्रताप्राप्ततः पूर्वं विभिन्नलघुराज्येषु राज्ञां शासनान्तर्गतमासीत् । कश्चन राज्ञिस्तदानीं संस्कृतशिक्षार्थं स्वराजधानीषु संस्कृत-विद्यालयाः अपि स्थापिताः—आसन् । एतेषां प्रमाणमद्य बघाटनरेशचालितः तारिणी संस्कृतमहाविद्यालय, सोलन नाम्ना ख्यातः, एवमेव सिरमौर मण्डले कालिस्थान सं० म० विद्यालयोऽस्ति । एषः—अपि सर्वकारेण गृहीतः सञ्चाल्यते च । मण्डीमण्डलस्य सुन्दरनगरस्थाने शुकेतराज्ञा चालितः संस्कृत-विद्यालयोऽपि - अद्य प्रशासनेन सञ्चाल्यते । एवमेव बिलासपुरराज्ञा अपि संस्कृताध्यापनाय पण्डितनियुक्तिः क्रियते स्म । परन्तु तत्कालीननृपैनं-संस्कृताध्यापनाय समुचिता व्यवस्था कृता इति सुस्पष्टमस्ति । यतोहि सर्वेऽपि राजानः प्रायेण आंग्लशासनेन तथा प्रभाविता आसन् - यत्ते संस्कृता-ध्यापनं गौणमेवाकार्षुः ।

— —

संस्कृतशिक्षाक्षेत्रे पारतन्त्र्ययुगे संस्थानामथ च संस्कृतविदुषां विशिष्ट-योगदानमस्ति। एतस्य प्रमाणं वर्तते शिमलास्थराजकीय नेहरू संस्कृतमहा-विद्यालयः यस्य चालनं ब्राह्म सभया संस्कृतविदुषां प्रेरणया कृतमासीत पूर्वं यस्य सम्पोषणं वर्धनञ्च परमपूजनीयैः आचार्यैः श्री दिवाकरदत्तमहाभागैर्नव-त्रिंशत वर्षपर्यन्त स्वप्राणपणेनापि कृत पश्चाच्च हि. प्र. प्रशासनाय समर्पितः। इत्थमेव शिमलामण्डलस्थ – क्यार्टू – मधानस्थितसंस्कृतमहाविद्यालयस्य सञ्चालनं स्वातन्त्र्यवर्षे एव जयहिन्दनामकसंस्थया कृतं पश्चाच्च श्री लाल-बहादुरशास्त्रिणां निर्देशेन हि. प्र. प्रशासनेन तदधिग्रहणमकारि।

एतदतिरिच्य तत्तत्स्थानस्थसंस्कृतविदुषां सहयोगः संस्कृतशिक्षाक्षेत्रे महीयान् नात्र संशयः। मया पूर्वमपि स्ववृद्धप्रपितामहमहाभागस्योल्लेखः—एतस्मिन् प्रसङ्गे कृतः। एवमेव न केवलं तेषां विद्वत्तायाः क्षेत्रं हिमाचलप्रदेश एवापितु पञ्चाबप्रदेशेऽपि तेषां विद्वत्तायाः प्रभावः—आसीत्। पटियाला-नरेशस्यान्धत्वनिवारणं तैः पार्वत्य- दिव्यौषधिप्रयोगेण कृतमासीत् - इति प्रसिद्धा जनश्रुतिः। पटियाला नरेशस्तदानीं तांस्तत्रैव निवसितुं विशालभू-क्षेत्रञ्च समुपभोक्तुं - प्रार्थयामास। परन्तु तैस्तन्न स्वीकृतं न च परित्यक्ता इयं पावना देवभूमिः। वयं लोकेभ्यः शृणुमस्तथा मम पूज्यपितामहाः वैद्य-राजानः श्री गंगाधरशर्माणः अपि कथयन्ति स्म यत् बहवश्छात्रा अस्माकं पूर्वजैः अन्नवस्त्रविद्यादिभिः सेव्यन्ते स्म।

एवमेव प्रख्यातपण्डिता आसन् आचार्य श्री दिवाकरदत्त शर्मणां पितामहाः प० श्री नारायणदत्तमहाभागाः। एतेऽपि ज्योतिष - कर्मकाण्डवैद्यकतन्त्र-मन्त्रयोगादिविभिन्नविषयाणां पण्डिताः अनेकेषाञ्च गुरवः आसन्। श्री नारायणदत्तमहाभागाः किल धामी राजपण्डितास्तत्रैव नववर्षपर्यन्त मन्त्रित्वेन जनसेवामकार्षुः। पुञ्छराज्यस्य महाराज्ञी एतेषां मुख्यशिष्या आसीत्। एतेषां गृहेऽपि बहवश्छात्राः संस्कृताध्ययनमकार्षुः। इयं परम्परा च प. पू. आचार्यैः दिवाकरदत्तमहाभागैरपि पूर्णरूपेण - पालिता।

शिमलासमीपे शोघीक्षेत्रे प० श्री केशवराम शर्मभिरपि अस्मदीय-पूर्वजशिष्यैः पाठशालाद्वयं आंग्लशासनकाल एव स्थापितमासीत्। एका काथलीघाटे तथा द्वितीया आनन्दपुरे आचार्य श्री दिवाकराणां प्रेरणया। परन्तु हा! हन्त? संस्कृतज्ञानामद्यापि निष्क्रियतया तत्र स्थानद्वयामेव प्राथमिकपाठशालारूपेणोभयोरेव संस्कृतविद्यालययोः परिवर्तनं जातम्।

एवमेवान्यत्रापि प्रदेशे संस्कृतविद्यालया अद्यापि जनैः प्रचाल्यन्ते। यदि प्रशासनेन पञ्चमहाविद्यालयाः सञ्चालिताः षष्ठश्चास्मिन्नेव वर्षे प्रशासनेन पपरोलास्थाने गृहीतः संस्कृतमहाविद्यालयः तर्हि प्रदेशस्य जनसमाजेनापि बहवः

संस्कृतमहाविद्यालया सञ्चाल्यन्तेऽद्यापि । अनेन प्रशासनस्य प्रदेश जनसमाजस्य च प्रयासेनापि संस्कृतप्रसारविकासकर्मणि साहाय्यं प्राप्यते । परन्तु संस्कृतशिक्षाकृते प्रदेशे स्वातन्त्र्योपरान्तं नाद्यावधि: कश्चिदपि महत्त्वपूर्ण: प्रयासः कृतोऽभूत् ।

एतदतिरिच्य प्रदेशस्य वैद्यकर्मकाण्डज्योतिषविद्यादीनां विदुषां परिवाराणामपि गणनाऽस्मिन् प्रसङ्गे कार्या एव एतैः स्वयं स्वपुत्रान् पौत्रान् वा संस्कृत पाठयित्वा महती हि सेवा संस्कृतशिक्षामधिकृत्य विहिता । एवं किल हिमाचलप्रदेशे विदुषां जनसाधारणस्य च संस्कृतशिक्षासमुत्थानाय पूर्वकालीनराज्ञामथवा वर्त्तमानप्रशासनापेक्षया महत्तरसहयोगस्त्यागश्च भारतीयसंस्कृति मूलरक्षणस्य महत्त्वपूर्णप्रयासोऽयमिति मामकीना सुदृढाऽवधारणा ।

## हिमाचलीयभाषासु संस्कृतम्

हिमाचल प्रदेशे ऽल्पभेदेन साकं बह्व्य: लोकभाषा प्रचलन्ति । परन्तु सर्वासामाधार: संस्कृतमेव । आंग्लसंस्कृतकोशकार: डा० सर एम. मोनियर विलिअमसोऽपि निखिलभारतीयजनप्रान्तभाषाधारं संस्कृतमेव मनुते । असौ लिखति :—

In union with these opinions, the framers of the statutes of the East-India College have provided, that no student shall be pronounced qualified for Indian service until he can make an intelligible translation from an English passage in to the oriental languages in which he has been instructed. And if this requirment has been wisely made, as a test of scholarship in the spoken dialects, much more has it so been made in regard to Sanskrit, the classical language of India which bears a far closer relation to those dialects than Greek and latin bear to the living languages of Europe. 2

बहुतर शतकोपरान्तं हिमाचल प्रदेश: संक्षिप्तरूपेणैक: जात: । यतोहि पूर्वमेष भाग:- मध्ययुगे लघुतमराज्ञां ठक्कुराणां वा प्रशासनेऽभूत । ततोऽपि यावानपि भूभाग एकत्रित: जात: हिमालयस्य तस्य धर्म: समान:, जीवनदर्शनं सम संस्कृति: समाना. नेदमेवापितु भाषाऽपि मूलत: समाना संस्कृतभाषाधारात् यद्यपि आकश्मीरात् - पूर्वोत्तरनेफापर्यन्तं यापि लोकभाषा: सन्ति ता: सर्वा: अपि पार्वत्यभाषा: सन्ति संस्कृतमयाश्च परन्तु हिमालयस्य पूर्वपश्चिमभागयो. भाषा: स्वीय अ.ग.ि य.व

2. English Sanskrit Dictionary, by Dr. Sir M. Monier Williams, Preface.

धारयन्ति । पूर्वस्यां दिशि नेफा - भूटान - सिक्किम - प्रदेशानां पार्वत्यभाषाः तिब्बत बर्मा–परिवारेण सम्बद्धाः । परन्तु तत्रापि मूलतः संस्कृतम् - द्रष्टुं शक्यते । इतः कश्मीर गिलगित - चितरालभाषाः दरदसमूहेन साम्यमावहन्ति । परन्तु मम मतानुसार-मत्रापि संस्कृतमूलता । जम्मूस्थले भद्रवाहतः पूर्वनेपालं यावत् जम्मू – हिमाचलप्रदेश-गढ़वाल कुमाऊँ – नेपालखण्डानां भाषाश्च–आर्यपरिवारेण साकं सम्बन्धिताः । एताश्च प्रायेण पार्वत्यभाषाः कथ्यन्ते ।

आसु पार्वत्यभाषासु डा० ग्रियर्सनः राजस्थानीयभाषाप्रभावमुपवर्णयति । एतदेव चान्यपार्वत्यभाषाभ्योऽत्र भेदकमिति तत्कथनम् । ग्रियर्सनः कथयति यत् — गुर्जरजातिः सिन्धुतः गुजरातमार्गेण राजस्थाने प्रविष्टा । शनैः शनैश्च सा निखिलेऽपि पश्चिमभारते प्रकीर्णा । अस्या जा⁻रेव वंशजाः सन्ति राजपुत्राः, जाटाः गुर्जराश्च ।

दशमएकादशशतकयोः मुगलानामाक्रमणेन एते गुर्जरदेशस्य क्षेत्रेभ्यः पला-यित्वा पार्वत्यप्रदेशेषु शरणमाप्नुवन नदीनां तटेषु च स्व–स्व-शासनानि संस्था-पितानि क्षत्रियैः । मूलभाषासु-एतेषामागमनेन परिवर्तनमभूत – राजस्थानीयभाषा-याश्च प्रभावोऽत्र दृश्यते ।

अपरतः डा०-सुनीति कुमार चैटर्जी हिमालयस्य आसां भाषाणां सम्बन्धं आर्य–भाषापरिवारस्यैव दरदशाखया बध्नाति ।

राहुलसांस्कृत्यायनः कथयति यदत्र आर्येभ्यः पूर्वं सजातीया एव खशबन्धवः निवसन्ति स्म । ते पर्वतमार्गैः अत्र प्रविविशुः मध्य एशियायाः कतिपयखण्डेषु तथा च आकश्मीरात् - नेपालपर्यन्तं खशराज्यमभूत डा० चैटर्जी अस्य मतस्य समीपमागच्छति परन्तु स दरदसमूहं पैशाचीप्राकृतस्यैव शाखां स्वीकरोति ।

पैशाची–प्राकृत - संस्कृतेन सम्यगतया सम्बद्धा इति वा को नाम संस्कृतज्ञो न जानाति । पारस्परिकसम्पर्केण प्रभावस्तु सर्वेषु निपतति - एव तदाऽसौ खशानां, गुर्जराणां, राजस्थानस्य उर्दूभाषायाः हिन्द्या वा आंग्लभाषाया वा स्यात् । सर्वोऽप्ययं प्रभावोऽत्र द्रष्टुं शक्यते । तथापि सुविधार्थं पुनः कश्मीरात् - नेपालं यावदस्य पर्वतखण्डस्य पार्वत्यभाषाः खण्डत्रय्यां विभाजिताः पूर्वपार्वत्या, मध्यपार्वत्या, पश्चिमपार्वत्याश्च । नेपालराज्यं पृथक् - वर्तते तस्मात् नयपाली भाषा पूर्वीपार्वती । उत्तरप्रदेशस्य कुमाऊं-गढवालक्षेत्रीया भाषा मध्या पार्वती । वर्तमानहिमाचलप्रदेशीया भाषाश्च पश्चिमपार्वती नाम्ना कथ्यन्ते । इयमपि मण्डलनाम्ना पृथक् पृथक् संज्ञां भजते ।

हिमाचल प्रदेशे राज्यभाषासंस्थानस्थापनोपरान्तमत्र हिमाचलीभाषाविकास-कार्यारंभो जातः एतस्य सूत्रपातः स्व. श्री लालचन्द्र प्रार्थी महाभागस्य प्रेरणया तत्कालीनमुख्यमन्त्रिणा डा० परमारेण कृत आसीत् । श्री प्रार्थिमहाभागेन प्रदेशस्य सर्वेऽपि संस्कृतविद्वांसः स्वविश्वासे गृहीताः । तैः साकं परामृष्टम् । हिमाचलीय-भाषायाः किं स्वरूपमत्र सम्मेलनायोजनमकारि । पं० पू० हिमाचलकुलगुरूणां आचार्य श्री दिवाकरदत्तशर्मणामत्र प्रथमः शोधप्रबन्धः पठितोऽभूत् हि. प्र. भाषा-

विषये । एभिर्हि सुदृढं सप्रमाण च साधितं हिमाचलभाषाणां संस्कृतमूलत्वम् । प्राथिमहाभागेन च पार्वत्यभाषाविकासेन साकं संस्कृतप्रसार विकालकृतेऽपि पूर्णस्थानं देयमिति भृशं समुद्घोषितम् । अस्मिन्नवसरे तत्कालीनविधायकस्य श्री रणजीतसिंह वर्मणः भाषणमपि महत्वपूर्णमभूत् । श्रीरणजीतसिंह बहुभ्य.—वषभ्यः ऊनामण्डलान्तर्गत—डोघीस्थाने संस्कृतमहाविद्यालय - सञ्चालयति । राज्यभाषा-संस्थानेन समायोजितेषु सर्वभाषाकविसम्मेलनेषु संस्कृतभाषाकाव्यपाठोऽपि समायोजितः । अनेनापि शनैः २ संस्कृतकाव्य स्वप्रसारे सहयोगमवाप्नोत् एतत्कृते ऽथ च प्राथिमहाभागस्य सर्वदा संस्कृतकार्यक्रम सहयोगार्थमद्यापि तान् सादरं स्मरामः ।

अनेन स्पष्टं भवति यदधुना स्वतन्त्रताप्राप्ति–पश्चात्—संस्कृतविदुषां प्रयासेन प्रशासनेनापि किञ्चित्साहाय्यमत्र संस्कृतप्रसारविकास —कर्मणि कृतमेव । अस्मिन्नेव काले पार्वत्यभाषायाः अथवा हिमाचलीभाषायाः लिपिः का भवेदिति द्वितीयः प्रश्नः समुद्भूतः । अत्र तदानीं विचारद्वयमायातम् । टांकरीलिपिः हिमाचलीभाषायाः भवेत् - देवनागरी वा अत्रापि गम्भीरा-लोडनमावश्यकमासीत् । संस्कृतज्ञा अत्रापि साहाय्यं प्रायच्छन् । मनुसंहिता-नारदस्मृति–समवायांगसूत्र–आदि— प्राचीनसंस्कृतग्रन्थानामाधारेण भारतस्य प्राचीनतमा ब्राह्मीलिपिः स्वयं ब्रह्मणा निर्मिता । चीनदेशस्य बौद्धग्रन्थे "फावामुलीन्" नामके ब्रह्मा - एव ब्राह्मीलिपिनिर्माता स्वीकृतः । ब्राह्मीलिपेः प्राक्तनरूपाणि - अशोकस्य शिलालेखेषु मिलन्ति । अशोकस्य कालः ईशातः ! तृतीयशतकपूर्वम् मन्यते । परन्तु मध्ययुगे दासताकाले बाह्यलेखकैः इति-हासकारैर्वा इदं सर्वं परिवर्तितम् । ते किल पूर्वं चलितासु वैदेशिकलिपिषु ब्राह्मीलिपिबीजानि समन्वेषयन्ति । जेम्स प्रिंसेपः, अलफ्रेड मूलरश्च ब्राह्मीं यूनानी - लिपितः— उद्भूतां मनुते । बर्नेलजेनसन— बेबरादिविद्वांसः फोनि-शियनतः ब्राह्मीमुद्भावयन्ति ब्राह्मीमभारतीयामुद्भावयितुं सवप्रधान नाम बूलरस्य वतते । स्वकीये प्रसिद्धग्रन्थे "इंडियन पेलेग्रोग्रेफी" इतिनामके १८ तमे पृष्ठे स स्वनिष्कर्षमेवं प्रददाति यत् — भारतस्य वणिजः—ईशातः अष्टशतकपूर्वं भारते एनां लिपिं व्यापारप्रसङ्गेन सेमिटिकवर्णमालारूपेण-आनिन्युः । ईशातः पञ्चशतवर्षाणि पूर्वं चेयं पूर्णतो विकासमाप ।

अत्रैव पण्डितगौरीशंकर ओझा "भारतीयप्राचीनलिपिमाला" इति स्वीयपुस्तके सप्रमाण बूलरस्य विचाराणां खण्डनमकरोत । यतोहि केनापि शिलालेखेन, अक्षरैः शैल्या वा तत्साधयितुं न शक्यते । प्रसिद्ध पुरातत्ववेत्तारौ हुल्श-फ्लीट - नामानौ अपि बूलरस्य विचारानर्थहीनान् - कथयतः । कनिंघमः स्पष्टयति यदाधुनिकनवीनानुसन्धानैरिद साधु साधितं यद् ब्राह्मीलिपिर्हि-उत्तरपश्चिमभारते व्यापकरूपेण प्रयुज्यते स्म वास्तविकतया इयमेव सर्वेषां हिन्दूनां राष्ट्रिया लिपिरासीत् ।३ डाउसन महोदयोऽपि स्वमतमेवं व्यनक्ति-

---

3. Cunningham: coins of Ancient India, page 33

आर्यैरेव ब्राह्मीलिपिः समाविष्कृता । अहं विश्वासेन कथयामि यत् - सर्वैरपि प्रमाणैरिदं साधु सिद्धयति यद् ब्राह्मीलिपिः स्वतन्त्रः- आविष्कारः ।४

ये पाश्चात्यपौर्वात्यविद्वांसः— ब्राह्मीं वैदेशिकीं कथयन्ति तेषामयं विचारः वेदानां श्रुतित्वात् - प्रपन्नः । तेषामनुसारं वेदास्तु कण्ठस्थो क्रियन्ते स्म न तु लिख्यन्ते स्म । परन्तु - एतावद् विशालसाहित्यस्य लेखनसाधनं न भवेदित्यपि स्वीकर्तुं न शक्यते । एतस्यापि प्रमाणानि सन्ति यत् वेदेषु ६४ वर्णाः आसन् । अतः परास्तमेवेदं दैवो उत्पत्तिश्च स्वीकार्या । यद्यपि विषयोऽय प्रस्ततपुस्तकस्य विषयादभिन्नस्तथापि संस्कृतेन सम्बद्धस्तथा च हिमाचली-भाषालिपिविषये कथं किल संस्कृतं विजयते इत्यपि संस्थापनायमस्ति ततोऽत-संक्षेपेणात्र ब्राह्मीहि भारतीया लिपि रिति निश्चयरूपेणोपस्थापितम ।

टांकरीः-

हिमाचल प्रदेशस्य स्वतन्त्रतापूर्वप्रशासनेषु विभिन्नलिपिप्रयोगो दृष्टः । टांकरी, उर्दू, अग्लिपयः । परन्तु - अधिकांशतः टांकरी लिपिरेव प्रदेशस्य विभिन्नविभागेषु प्रसृता आसीत् । एषा लिपिर्हि टाक्री, टाँकरी, टाँखरी, ठाकरी, ठक्कुरी, टककरी - टक्की - आदिविभिन्ननामभिः कथ्यतेस्म । अस्य शब्दस्यापि विद्वद्भिः- विभिन्नाः व्याख्याः कृताः केषाञ्चन मते ठक्कुरी टाकरी वा । यतोहि पूर्वमत्र ठक्कुराणां राणानाम्बा शासनमासीदतस्तेषां लिपिरिति । डा० ग्रियर्सनः टक्कजात्या साकमस्याः सम्बन्ध युनक्ति । टक्क-नामकजातिः कदाचिदत्र राज्यमकरोत अस्या राजधानी सियालकोटपार्श्वे शाकलनाम्ना प्रसिद्धा आसीत् । अस्याः लिपिः डा० भोलानाथ तिवारी टांकजात्या साकमेनां बध्नाति । परन्तु टांकरी शब्दस्तु संस्कृतस्य टङ्कधातोः समुद्भवति । यस्यार्थः छिद्रकरणं कर्तनं वा पाषाणोपरि लेखनम्वा । तस्मात्-टांकरी टंकणात् – लेखनात् । अद्यापि हिमाचलीभाषासु (टांक-लिख) एवं प्रयुज्यते । केश्चनास्याः सम्बन्धः खरोष्ट्री लिप्या सह योजितः । दीर्घेयं कथा विषयान्तरश्च भविष्यति तस्मादिदमेवात्र पर्याप्तमस्ति यत - ब्राह्मीलिप्याः शैलीद्वयमस्ति । दक्षिणशैलीतः तेलुगु- कन्नड़- तमिल - आदिलिपयः उत्तरीशैं-लीतश्च देवनागरी-गुजराती-बंगला - उड़िया - शारदा लिपयश्च समुद्भूताः । टांकरी - लंडा–महाजनी - डोगरी- आदयः लिप्यः ब्राह्मया शारदारूपादुद्भवाः परन्तु टांकरीलिपिः हिमाचलीभाषायाः विकासमक्षिलक्ष्यी कृत्य पर्याप्ता नासीत्तस्मात् - अथ च राष्ट्रियैक्यमाधारी कृत्यापि विभिन्नलिपिविकासो देशे न कल्याणाय - इति सम्यङ्निरीक्ष्य संस्कृतविद्वद्भिः प्रदेशस्य निर्णयोऽयं व्यक्ती कृतः यत् - देवनागरी एव लिपिः हिमाचलीभाषाया भवेत ।

हिमाचलीभाषासंस्कृतेन कथं प्रभाविता इति पूर्वविवेचनेन स्पष्टीकृतम् । इदानीं संस्कृतकोषाधारः हिमाचलीभाषायाः भाषाणाम्बेति पुरतो विवेच्यते ।

---

4. Journal of the Royal Asiatic society, 1881 page 102

# हिमाचलीयलोकभाषादर्पणे संस्कृतकोषप्रतिबिम्बः

हिमाचलोऽयमनादिकालादेव सकलस्यापि संसारस्य कृते समाकर्षणस्य केन्द्रोऽभूत्। अद्यापि समाकर्षणं तत् यथापूर्वमस्ति। इयं किल वेदभूमिः सैषा चैव देवभूमिरपि।

अत्रैव प्रथमं ऋषिभिर्वेदगीतानि गीतानि। अस्यैवोपत्यकासु नटराजो व्याकरणस्य चतुर्दशसूत्राणि समुद्भावयामास। सरस्वती रूपापि जगज्जननी जगदम्बिकात्र ग्रामे, ग्रामे नगरे, नगरे च परिपूज्यते। इत्थमियं हिमाचलस्य भूमिः शिवपार्वत्योः प्रकृतिपुरुषयोर्वा क्रीड़ास्थली। ऋषयो मुनयो विद्वांसश्चास्य रमणीयस्थलेष्वाश्रमनिर्माणं कृत्वा कठिनतमानि तपांसि तप्त्वा स्वविचारैर्विश्वं प्रभावयामासुः, भारतीयसंस्कृतिमूलभूतां वैदिकसभ्यतां प्रतिष्ठापयाञ्चक्रिरे यस्या विभिन्नानुकृतिं मानवश्चकार। विश्वक्रान्तिकारिणां निवासभूमिरियम्। यैरस्य हिमाचलस्य गौरवगरिमा जेगीयते। एभिर्हि-अज्ञानान्धकारकूपनिपतितस्य मानवमात्रस्योद्धरणं कृतमतो भारतस्य भारतीयसंस्कृतेः भारतीयसभ्यतायाश्च प्रचारणे ऋषाणामेषां ऋषिभूमेर्हिमाचलस्य च प्रमुखं स्थानम्।

परं सत्यमिदं यत्कालोऽयं दुरतिक्रमः। अतोऽस्मिन् विभिन्नपरिवर्तनानि भवन्ति तदनुसारं च हिमाचलस्य सा पुराणा प्रतिष्ठा, तदाकालीनं गौरवं, पूर्वपुरुषाणां ऋषीणाञ्च विश्वज्ञानप्रदीपकत्वम्, एतत्सर्वं भग्नासु, भ्रष्टासु ऐतिहासिकशृंखलासु यत्र तत्र विकीर्णम। त्रुटितास्ता इतिहासशृंखला समयधूल्यन्तरे तथा लुप्ता यथा तासामन्वेषणं न केवलं कठिनमभूत् परं असम्भवमपि जातम्।

चक्रारवत् कालः पुनरावर्तितः। वैदेशिका अपि हिमाचलसौन्दर्येण मुग्धा बभूवुः। तैरेनमाश्रित्य बहुतरसाहित्यनिर्माणमकारि। न केवलमिदमेव तैरन्यभाषामाश्रित्यापि लिखितम। अत्र ग्रियर्सनस्य "भारतीयभाषासर्वेक्षणम्" (Linguistic Survey of India) नामकस्य विशालतमस्य बहुभागेषु प्रकाशितस्य ग्रन्थस्य नामोल्लेखः कर्तुं शक्यते। एषु भागेषु एकस्मिन् भागे हिमाचलस्य भाषाविषयेऽपि तेन लिखितम। अयं ग्रन्थः भारतस्य भाषाशास्त्रिषु बहुचर्चितः। एतद विषयेऽत्र मयेदमेव निवेद्यते यद् भारतीयविद्वद्भिः स्वविषये स्वयमेव निर्णेतव्यम्। किमयं ग्रन्थो भारतस्य भाषानुसारिप्रान्तनिर्माणे क्वचित विशेषकारणन्तु नाभूत ? किमेतस्यैव वशात्

आहिमाचलात् केरलपर्यन्तमेकच्छत्रराज्यस्य भारतस्य एकताया आधारशिला क्वचिदान्दोलिता, तु नाभूत् ? अस्तु नाम तत्। स्वतन्त्रतायाः सप्तदशवर्षानन्तरं हिमाचलस्य पुनर्गठनमभूत्। प्रदेशाय भारतमात्रस्य वा सौभाग्येन तत्र श्री लालचन्द प्रार्थी महाभागो मन्त्रमण्डले सम्मिलितोऽभूत्। अयं भारतीयसंस्कृतिसभ्यतामर्मज्ञः स्वातन्त्र्यसङ्घर्षे षष्टः सन् विविधयातनापूर्णजीवनयापनाच्चानेकरोगग्रस्तोऽपि कलाभाषासंस्कृतिसमृद्धावर्पितोऽभूत्। आयुवदोद्धारेण प्रशासकत्वेन वा या सेवाऽनेन कृता सा युगानुयुगं स्मरणार्हा। 'कुलूत देश की कहानी' ग्रन्थमिमं येन प्रकारेण स समुल्लिलेख तेन हिमाचलस्य वेदगानभूमित्वं विश्वमानवसभ्यताभूमित्वञ्च सर्वथा सिद्ध्यति। अनेन महानुभावेन ऐतिहासिकशृंखलान्वेषणं कृतम्। अतः कठिनकार्यं तु जातम्। मयात्र संस्कृतस्य विभिन्नेषु वैदिकलौकिक-कोशेषु हिमाचलीयभाषाशब्दाः प्राचुर्येण भ्रष्टाः। तेषु स्वल्पशब्दानामुल्लेखोऽत्र क्रियते। प्रथमम् नैघण्टुकानां पार्वत्यशब्दानाञ्च समावेशोऽयमवलोक्यताम् :—

| निघण्टौ सञ्ज्ञा शब्दाः | हिमाचलीयभाषायाम् सञ्ज्ञा शब्दाः |
|---|---|
| अम्बरम् | अम्बर |
| आकाशः | गाश |
| किरणः | किरण |
| कुल्याः | कूल |
| गम्भरम् | गम्बर |
| गौः | गौ |
| जलम् | जल |
| नदी | नदी |
| नीरम् | नोर |
| भूमिः | भूईं |
| वाणी | बाणी |
| वासरम् १ | बार |

अथ वैदिक-पार्वत्य-क्रियाशब्दा अपि द्रष्टव्याः

| वैदिकाः | पार्वत्याः |
|---|---|
| वदेम | बोलमे |
| दुहीयत् | दुहो |
| शिक्षा २ | शखाओ |

१. निघण्टुः। यास्क। अ. १

२. नूनं सा ते प्रतिवरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ऋ. २।११।९ नि. अ. १

| | |
|---|---|
| आस्ते | असो |
| गायति | गाओ |
| वदति | बोलो |
| मिमीत ३ | मापो |
| ददृश्रे ४ | दिशुए |
| ववाशिरे ५ | वाश |
| चरति ६ | चरने |
| शुश्रुवां | शुणा |

संस्कृतपार्वत्यसर्वनाम्नां तुलनां क्रियताम् :-

| | |
|---|---|
| सः | से सी सौ से ओह् से........ । |
| त्वम् | तू तुमे तुए तमें तुसें तोमें तुसे तुसां तुसी । |
| अहम् | हीऊं आऊं-आँ, हुंऊ हऊ अऊं । |
| यः | जू जु जेणो जुण जे जो । |
| कः | कुण |
| कीदृशः | किशा, केशो, कीणो |
| तादृशः | तिशा |
| एतादृशः | इश्शा |
| यादृशः | जिश्शा |
| एकलः | एखला, केला, केलो, कल्ला कल्हा किल्ला । |
| कठिनम | कठण, कौठिण, काठा, कठन । |
| गौरः | गोरा । |

३. ऋचां त्व पोषमास्ते पुपुष्वान्
गायत्रं त्वो गायति शक्वरीषु
ब्रह्मा त्वो वदति जात विद्यां
यज्ञस्य मात्रां वि मिमीत उत्वः ऋ. १०-७१-११ नि. अ. १

४. आदघ्नास उपकक्षास उत्वे ह्रदा इव स्नात्वा उत्व ददृशे
ऋ. १०-७१-७ नि. अ. १

५. विस्मयस्यन्तो ववाशिरे शिशिरं जीवनाय कम् ।
निरुक्तम् — अ. १. १० नि. अ. १

६. अधेन्वा चरति माययैष
वाचं शुश्रुवाँ अफलामपुष्पाम् ॥
ऋ. १०-७१-५ नि. अ. १

अङ्गविकलताप्रबोधकशब्दाः

| | |
|---|---|
| अन्धः | अन्धो |
| काणः | काणा |
| खोडः | खोड़ा |

क्रिया

| | |
|---|---|
| उत्तिष्ठति | उठो, |
| खादति | खाओ । |
| चलति | चलो |
| जागर्ति | जागो ! |
| पूजयति | पूजो |
| रुदति | रो |
| विशति | वेशो |
| हसति | हसो |

अन्ये शब्दाः

| | स. | कां. | कु, | च. | वि. | मं. | शि. | सि. |
|---|---|---|---|---|---|---|---|---|
| अङ्कुरः | कुर, | आर, | अंगुस, | अंगूर, | अगर, | अंगुर, | आँगुर, | आंगरा |

अङ्कुरोऽभिनवोद्भिदि ... — ... ।
अङ्कुशोऽङ्कुर एवाञ्च — — —... । १

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| अङ्गम | अंग | ऑंग | अंग | अंग | अग | अंग | अग |

(अङ्ग प्रतीकोऽवयवोऽपघ-नोऽथ कलेवरम् । ) २

अङ्गारः गारु (गार, ग्नार) अंगरा अंगार अंगार ग्यारठा, गार
अथ न स्त्री स्याबङ्गारः । ३
अंगारमुल्मुके न स्त्री (मेदिनी)

आम्रः अम्ब (आम आम्ब) अम्ब, अम्ब (आम आम्ब) (आम् अम्ब) आम्ब
आम्रश्चूतो रसालः ।४

---

१. अमरकोशः श्लो. ४ कां. २ व. ४।
२ अमरकोशः ,, ७० ,, २ ,, ६
३ ,, ,, ३० ,, २ ,, ६
४ ,, ,, ३३ ,, २ ,, ४

| | स | कां | कु | च | बि | म | शि | सि |
|---|---|---|---|---|---|---|---|---|
| आनन्द: | नन्द | नन्द | नन्द | नन्द | अनन्द | (अनन्द, नन्द) | | नन्द |

स्यादानन्दथुरानन्द: ।५

| आदर: | आदर | आदर | आदर | आदर | ,, | ,, | ,, |
|---|---|---|---|---|---|---|---|

आदृतौ सादरार्चितौ । ६

| आशा | आस | आशा मेद | आस | आस मेद | आसा | आश | आश |
|---|---|---|---|---|---|---|---|

आशा तृष्णापि चायता । ७

| आराम: | राम | राम | राम | राम | राम | राम | राम |
|---|---|---|---|---|---|---|---|

आराम: स्यादुपवनम् ।

(आरमन्त्यत्र-भानुजदीक्षित:) ८

| इच्छा | इच्छिया | इच्छा | इच्छा | इच्छा | इच्छा | इच्छा | इच्छा |
|---|---|---|---|---|---|---|---|

इच्छा कांक्षा स्पृहेहा । ९

| इष्टिका | इटट | ईन्ट | इटट | ईंट | ईन्ट | ईट | ईट |
|---|---|---|---|---|---|---|---|
| ईश्वर: | ईश्वर | ,, | ,, | ,, | ,, | ,, | ,, |

ईश्वर: शर्व ईशान: १०

| ईर्ष्या | हिरख | मीश | हिरख | हिरख | हिरख | रीष | रीष |
|---|---|---|---|---|---|---|---|

अक्षान्तिरीर्ष्याऽसूया तु ११

| उदासीन: | द्वास | द्वास | उदास | द्वास | द्वास | द्वास | द्वास |
|---|---|---|---|---|---|---|---|

उदासीन: परतर: १२

---

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ५ | ,, | ,, | २५ | ,, | १ | ,, | ४ |
| ६ | अमरकोश: | श्लोक: | ८४ | का. | ३ | व. | ३ |
| ७ | ,, | ,, | २१६ | ,, | ३ | ,, | ३ |
| ८ | ,, | ,, | २ | ,, | २ | ,, | ४ |
| ९ | ,, | ,, | २७ | ,, | १ | ,, | ७ |
| १० | अमरकोश: | श्लोक: | ३० | ,, | १ | ,, | १ |
| ११ | ,, | ,, | २४ | ,, | १ | ,, | ७ |
| १२ | ,, | ,, | १० | ,, | २ | ,, | ८ |

मोतीलाल बनारसीदास बंगलोरोड, जवाहरनगर दिल्ली-७ संकेतात् संस्कृतपुस्तकप्रकाशकेन प्रकाशितं अपूर्वग्रन्थचतुष्टयम् ।

## श्रीमद्भागवतपुराणम्

श्रीधरस्वामिविरचितया भावार्थबोधिनीनाम्न्या संस्कृतटीकया समुपेतम् । पृष्ठानि=८०३, मूल्यम्, वस्त्रबन्धयुक्तस्य २०० रु० कार्डबन्धयुक्तस्य १५० रु० ।

शताधिकवर्षाणि व्यतीतानि । यत्प्रथमं श्रीधरव्याख्योपेतं श्रीमद्भागवतपुराणं निर्णयसागर मुम्बई मुद्रणालयात्प्रकाशितमभूत् । परं तत्संस्करणमिदानीमनुपलब्धप्रायमासीत् । प्रकाशकमहोदयेन पुनः प्रकाशनं विधाय महदुपकृतं संस्कृतजगतः पुराणमिदं पुस्तकाकाररूपेण प्रकाशितम् । मूलपाठः स्थूलाक्षरैर्मुद्रितः व्याख्या सूक्ष्माक्षरैः । आचार्य जगदीशलालशास्त्रिभिः क्वचित्क्वचित् टिप्पण्यापि सुसंस्कृता व्याख्या । पुराणवाचकानां कृतेऽपीदं संस्करणमुपयुक्तं प्रतीयते । कागजमपि सुदृढं वर्तते । अशुद्धिपत्रमपि अन्ते समायोजितम् ।

## ज्योतिषरत्नाकरः

लेखकः—श्री देवकीनन्दन सिंहः । पृष्ठानि—१०६० मूल्यम् , बन्धसहितस्य—१५० रु० । बन्धरहितस्य—१२० रु० । द्वितीयसंस्करणम् ।

अयं विशालो ग्रन्थो ज्योतिष[illegible] हिन्दी भाषायां वर्तते। प्रवाहद्वये विभक्तोऽयं ग्रन्थः । प्रथमे गणितप्रवाहे खगोलादिसामान्यगणितादिकथाणां प्रतिपादनं कृतं, द्वितीये ज्योतिषरहस्यप्रवाहे विविधशुभाशुभयोग अष्टक-वर्गादिसाधनप्रकारः प्रदर्शितः । तृतीये व्यावहारिकप्रवाहे अष्टकवर्गफल-विचारः— द्वादशभावफलविचारः दशादशान्तरफलविचारः, तथानेकेषां महापुरुषाणां ९९ मिता जन्मलग्न कुण्डल्यो जीवनचरितसहिताः सन्नि-वेशिताः । हिन्दीभाषामाध्यमेन ज्योतिषविषयकसमस्तज्ञान प्राप्त्यर्थमपूर्वोऽयं ग्रन्थः ।

●

## ज्योतिषशास्त्रमें रोगविचार

लेखकः—डा० शुकदेव प्रसाद चतुर्वेदी, पृष्ठ संख्या-२४० मूल्यम्, बन्धसहितस्य-६५ रु० । बन्धरहितस्य-४५ रु० । प्रथमसंस्करणम् ।

हिन्दीभाषायां लिखितेऽस्मिन् नवाध्यायात्मके ज्योतिषग्रन्थे ग्रहयोग-प्रभावेण विविधप्रकारका रोगाः कथमुत्पद्यन्ते तथा कासु २ दशासु के रोगाः प्रभवन्ति इति लेखकमहाभागेन सप्रमाणं विवेचितम् । फलादेशजिज्ञासूनां सर्वथोपयुक्तोऽयं ग्रन्थः ।

●

## सारावली

हिन्दीव्याख्याकारः— डा० मुरलीधर चतुर्वेदी । पृष्ठसंख्या ५५८ । मूल्यम्, बन्धयुक्तस्य-६५ रु० । बन्धरहितस्य— ४५ रु० । द्वितीयं संशोधित संस्करणम् ।

श्रीमत्कल्याणवर्मविरचिता सेयं सारावली ज्योतिषशास्त्रस्य प्राचीन-ग्रन्थो वर्तते। अस्मिन् ग्रन्थे ५३ अध्यायाः सन्ति । हिन्दी व्याख्याकारेण न केवल श्लोकानां व्याख्यामात्रं कृतम् अपितु व्याख्यायां विभिन्न ज्योतिषग्रन्थानां प्रमाणान्तराण्यपि यथास्थानं निवेशितानि । फलादेशविषयेऽपूर्वोऽयं ग्रन्थः सारावल्यां प्रतिपादिताः शुभाशुभयोगाः, दशादशान्तर्दशादि फलानि प्रायेण चमत्कारयुक्तानि भवन्ति – इति प्रतिपदमनुभूयते । फलादेशजिज्ञासुभिः सारावली संग्रहणीयः ।

— दिव्यज्योतिः

———

# "हिमाचल प्रदेश संस्कृत शिक्षक परिषद्"

## मांग पत्र

आज दिन 6-10-84 को प्रदेश प्रधान श्री गोबिन्द राम शास्त्री जी की अध्यक्षता में हिमाचल प्रदेश संस्कृत शिक्षक परिषद प्रदेश कार्यकारिणी एवं जिला के प्रधान, उप प्रधान, महा मन्त्री तथा अन्य पदाधिकारियों की बैठक श्री लक्ष्मीनारायण मन्दिर बिलासपुर में आयोजित हुई जिसमें संस्कृत भाषा के उत्थानार्थ आचार्य श्री दिवाकर दत्त, माननीय मुख्य मन्त्री श्री वीरभद्र सिंह आदरणीय शिक्षा मन्त्री श्री सन्त राम शिक्षा निदेशक श्री एन. आर. पाठक जी के सहयोग की सराहना की गई।

प्रदेश के संस्कृतज्ञों ने माननीय मुख्यमन्त्री जी के प्रति धन्यवाद प्रस्ताव भी पारित किया जिन्होंने "संस्कृत भवन" के निर्माणार्थ २ लाख की धनराशि स्वीकृत की। इस घोषणा से प्रदेश के लोगों में "अमर भारती" के प्रति उत्साह व्यक्त किया जा रहा है।

प्रदेश में "संस्कृत भाषा" को उचित प्रभुत्व उपलब्ध होने पर नई प्रगति की किरण उभर कर आयेगी सर्व सम्मति के निर्णय अनुसार निम्न प्रस्ताव पारित किये गये :—

१. हिमाचल प्रदेश संस्कृत शिक्षक परिषद् को सरकार द्वारा मान्यता प्रदान की जाये तथा अन्य संघों की भान्ति पदाधिकारियों को सुविधायें प्रदान की जायें।
२. प्रदेश में संस्कृत भाषा को स्कूल पाठ्यक्रम से लेकर कालेज स्तर तक अनिवार्य घोषित किया जाये।
३. प्राज्ञ कक्षा को मैट्रिक के सम कक्ष माना जाये।
४. माध्यमिक पाठशालाओं को उच्च पाठशालाओं में परिवर्तित करते हुए एक अतिरिक्त शास्त्री पद सृजित किया जाये।
५. मैट्रिक कक्षा में संस्कृत के भी अन्य विषयों की भान्ति ए और बी दो प्रश्न पत्र नियत किये जायें।
६. आचार्य उपाधि प्राप्त संस्कृत अध्यापकों को स्नातकोत्तर अध्यापकों की सूचि युगल करते हुए वेतन में भी सम-कक्षता प्रदान की जाये।
७. राजकीय संस्कृत महाविद्यालय में ओ. टी. पदों को आचार्य पदों में परिवर्तन किया जाये।
८. प्रदेश के संस्कृत दिवस पर संस्कृत शिक्षक परिषद् के पदाधिकारियों को भी आमन्त्रित किया जाये।

९. हिमाचल के नवीन क्षेत्रों कांगड़ा, हमीरपुर, ऊना, कुल्लू, लाहौल स्पीति में जिला स्तर पर एक-२ राजकीय संस्कृत महाविद्यालय अथवा प्राईवेट संस्कृत महाविद्यालय को शासकीय महाविद्यालयों में परिवर्तित किया जाये।
१०. संस्कृत के सेमीनार जिला स्तर पर आयोजित किये जायें।
११. एस..वी अध्यापकों के रिक्त पदों पर शास्त्री अध्यापकों की नियुक्ति की जानी चाहिए।
१२. मुख्यमन्त्री महोदय को परिषद द्वारा अभिनन्दन करने का प्रस्ताव सर्व सम्मति से पारित किया गया।
१३. प्रदेश स्तर "संस्कृत उप निदेशक" एवं जिला स्तर पर संस्कृत निरीक्षक" की नियुक्ति की जानी चाहिए।
१४. तदर्थ संस्कृत अध्यापकों को तुरन्त नियमित किया जाये।
१५. हायर स्कैण्डरी विद्यालयों में संस्कृत प्राध्यापक के पद सृजित किये जायें तथा आचार्य संस्कृत एम. ए. (शास्त्री) को नियुक्ति के समय अधिमान दिया जाये।
१६. ओ. टी. के पद पर केवल शास्त्री को ही नियुक्ति की जाये।
१७. शास्त्री अध्यापकों को अन्य स्नातक अध्यापकों की भान्ति वेतन में समानता एवं पदोन्नतियों के सुअवसर प्रदान किये जायें।

परिषद द्वारा उपरोक्त मांग पत्र को शीघ्रातिशीघ्र सरकार से मनवाने के लिए आग्रह किया गया।

प्रतिलिपिः—
१. माननीय मुख्य मन्त्री श्री वीरभद्र सिंह, हि० प्र० शिमला।
२. आदरणीय शिक्षा मन्त्री श्री सन्तराम हि० प्र० शिमला-२
३. माननीय शिक्षा निदेशक श्री एल. आर. पाठक हि० प्र० शिमला।
४. माननीय लोक सभा सदस्य हमीरपुर क्षेत्र, श्री नारायण चन्द पराशर जी।
५. माननीय परिषद संरक्षक आचार्य श्री दिवाकरदत्त शास्त्री बिहार मशोबरा शिमला।
६. माननीय सचिव शिक्षा स्कूल बोर्ड धर्मशाला कांगड़ा।

— भवदीय
(प्रेमलाल शास्त्री महामन्त्री)
हि० प्र० संस्कृत शिक्षक परिषद कार्यालय रा० उच्च पाठशाला मल्यावर बिलासपुर हि० प्र०

# अध्यापक सम्मानित

रामकृष्ण रियाल, एम. ए. एल.एल. एम.
मन्त्री - हारसी ग्राम सुधार सभा दिल्ली

हारसी— २३ जून श्री रवि काँत शर्मा शास्त्री राजकीय माध्यमिक विद्यालय हारसी जिला काँगड़ा हिमाचल प्रदेश को उनके सराहनीय अध्यापन कार्य के लिये हारसी ग्राम सुधार सभा दिल्ली की ओर से वर्ष १९८३-८४ का सर्वश्रेष्ठ अध्यापक घोषित किया गया और श्रीमती चन्द्रेश कुमारी राज्य मन्त्री पर्यटन विभाग हिमाचल प्रदेश के कर कमलों द्वारा प्रशंसा पत्र देकर सम्मानित किया गया। शास्त्री जी हिन्दी, संस्कृत और पहाड़ी के लेखक हैं

# संस्कृत छात्रपरिषद का निर्वाचन

आज दिनांक १२-५-८४ को प० हि०हा० सै० स्कूल रोपड़ के समस्त १५० छात्रों की 'संस्कृत-छात्र परिषद' का गठन विगत बर्षों की भाँति किया गया। इसमें जो छात्र-छात्रा, प्रधान एवं महामन्त्री चुने गए हैं, उन्होंने परिषद का कार्य सुचारू ढंग से चलाते हुए संस्कृत में छात्रों की रुचि के लिए सांस्कृतिक गतिविधियों के संचालन का निश्चय किया। सर्व प्रथम —'दिव्यज्योति'— पत्रिका को विद्यार्थी (स्कूल स्तरीय) पढ़ सकें इसके लिए सामग्री प्रकाशित करवाने के लिए लिखने को कहा गया तथा नियमित रूप से इस पत्रिका को स्कूल में मंगवाने का विचार पारित किया गया। मान्यबर प्राचार्य एव बाहर से आए सस्कृत अध्यापकों के समक्ष परिषद का चुनाव हुआ।

श्री सुनील कुमार सोफत दशम् (अ) अध्यक्षः
कुमारी सुजाता शर्मा दशम् (अ) महामन्त्री

प्रेषकः — संस्कृत अध्यापक
— महेन्द्र शर्मा

# समस्या पूर्तिः

## प्रसार्य पादौ कः सुखेन शेते ?

यस्यास्ति कोशो मणि-रत्न-पूर्णः,
सन्तः सहायास्तुरगी तुरङ्गाः ।
मतिर्विचित्रा कवि कर्मदक्षो,
प्रसार्य पादौ स सुखेन शेते ॥

यस्यास्ति धान्यं सदने विशालम् ,
हैयङ्गवीनं महिषी पयश्च ।
राज्याश्रयो भोगप्रदः समृद्धः,
प्रसार्य पादौ स सुखेन शेते ॥

साधुः सखा भृत्य जनश्च नम्रः,
स्वामी सुविज्ञः सुजनाश्च पथ्याः ।
ऋणं न धार्यं न च राज-भीतिः,
प्रसार्य पादौ स सुखेन शेते ॥

वश्यः सुतो वित्त करी च विद्या,
देवोऽनुकूलः पितरौ प्रसन्नौ ।
भार्या विनीता तनुजा न वंशे,
प्रसार्य पादौ स सुखेन शेते ॥

देशे विदेशे शुचिश्वेतकीर्तिः,
पत्नी कुलीना सुमुखी सवत्सा ।
मुखे पवित्रा सरला च वाणी,
प्रसार्य पादौ स सुखेन शेते ॥

यस्यास्ति धान्या सुफला स्वभूमिः,
यानानि नानासुखमावहन्ति ।
भूरीणि सन्तीह च शैवराणि,
प्रसार्य पादौ स सुखेन शेते ॥

प्रभुर्न विज्ञो रमणी न रम्या,
पुत्रः प्रमादी तनया च मन्दा ।
स्थिरो न चायः चपलाः सखायः,
प्रसार्य पादौ स सुखेन शेते ॥

मन्त्री कुमन्त्रो न च साध्य- सिद्धिः,
गेहे च सर्पः पिशुनोऽविदूरे ।
रोगा नवीना विविधाः शरीरे,
प्रसार्य पादौ स सुखेन शेते ॥

नैशाः सहायाः परवित्त-चित्ताः,
राज्ञो भयं शत्रु-भयं सदैव ।
सतां न सङ्गः कुलहीनसेवा,
प्रसार्य पादौ स सुखेन शेते ॥

शुकदेव शर्मा प्रधानाचार्यः
सर्वकारीय संस्कृत
महाविद्यालय, नाभा

# गणतन्त्रसरणिः

डा. शिवदत्त शर्मा चतुर्वेदः,
प्रवक्ता — साहित्यविभागे, काशीहिन्दूविश्वविद्यालयः वाराणसी

निर्वाचनं चुनावो मतदान पारिवारिका. शब्दाः ।
भारतभाग्यविधातुः कोशे दीप्ति वितन्वतेऽद्यत्वे ।
स्वाराज्यं साम्राज्यं सर्वाधिकचक्रवर्तित्वम् ।
निखिल समुद्रपारे गतं हिमाद्रौ गतं किं वा ।
पारपारिकीयाऽसीद् राज्ञां सरणिस्तु भारते वर्षे ।
वल्लभ भाई पटेलस्तां सर्वां शोषयामास ।
आंग्लानां यच्छासनमासीद् विपुल पृथिव्यां वा ।
यत्र च सूर्योऽस्तोऽपितु नैवाऽभवदिति सुविख्यातम् ।
गान्धिमहात्मा तद्वै समापयामास भारताद्वर्षात ।
विरचितनव्यविधानं नव्यमिद भारतं जातम ।
राजा यथा भवेद्वा प्रजा तथैवेति या भणितिः ।
सा प्रत्यक्षं सिद्धा विलोक्यते सर्वमूलं सा ।
गणतन्त्रात्मकशासनपद्धतिरङ्गीकृता स्वतन्त्रेण ।
भारतवर्षेणेत्थं चुनावचक्रं समायातम् ।
बहुमतमाद्रियते यन्निर्वाचनसरणिदीक्षायाम् ।
तन्नूनं संसारे प्रभावमयतां समादिशति ।
मतदात्री जातेयं स्वयमेवेत्थं स्वशासनं रुचिरम् ।
संस्थापयति विलोपयत्येव विपरीतम् ।
संसारे सर्वाधिकजनगणनासिद्धगणतन्त्रम् ।
भारतवर्षेऽद्यत्वे विलोक्यते पूर्णरूपेण ।
अद्यतनेऽस्मिन्देशे चुनावकार्ये गुणानि सुवहूनि ।
अनुभवविभवसमेतान्यायान्त्येव प्रकामविस्तारम् ।
जनगणहृदयाकाशे भूयान् विश्वासलाभोऽयम् ।
सत्तासाधनकारी विलोक्यतो यो बिलुप्त एवाऽसीत् ।

नगराणां ग्रामाणामैतिह्ये चित्रितस्थलानां च ।
शुभ्रविकास विलासो विलोक्यते यो मनोहरति ।
साक्षरताऽपि समृद्धा जनतायाँ निष्प्रभा याऽसीत् ।
जनगणनामोट्टकनमपि जातं मुद्रितं सर्वम् ।
भारतराष्ट्रपतीनाँ प्रवर्तिता सा परपरा दिव्या ।
श्री राजेन्द्रप्रसादादारभ्यैषा विभासते सततम् ।
वीरजवाहरलालादारभ्यैषा प्रधानमन्त्रित्वे ।
पारंपरिकी गाथा निखिलं विश्वं विमोहयति ।
नाना नवराज्यानां सर्वोच्चा राज्यपालास्ते ।
सर्वैर्विभवैर्युक्ता विभान्ति देशस्य नेतारः ।
राज्यविधानसभानाँ शासनकर्मणि सुदक्षाणाम् ।
मण्डलमेतदतीवोल्लसितं नूनं समाभाति ।
प्रतिराज्यं संगठितं नेतृणां मन्त्रिमण्डलं निखिलम् ।
भारतराष्ट्रस्य चिरात् कुरुते शिर उन्नत सततम् ।
निखिलपदेष्वब्दत्वे भारत—जनता निवेशो वै ।
सन्दृश्यते समन्तात् सुदिनं चैतन्समायातम् ।
प्राचीनोऽयं देशः संसारे सर्वमान्यश्च ।
तत्रान्वेषणनिधयाविलोक्यते वाङ्मयं सर्वम् ।
नवरचना बाहुल्यं सोत्साहं जायते तादृक् ।
स्वातन्त्र्यस्य फल तद् विलोक्यते पूर्णरूपेण ।
सामाजिक रचनायाः सगठने चापि दोषराहित्यम् ।
शासन संचालितमय विलोक्यते प्रागसंभवं यदासीद्वै ।
प्रतिपञ्चवर्षमवधीकृत्यैवाऽस्ते चुनाव परिपाटी ।
तत्र नु विजयमवाप्यैवास्ते शासकविनिर्णयः सम्यक् ।
अनया विधया नूनं बारद्वयमत्र तज्जातम् ।
परिवर्तनं सुविपुलशासनकार्ये सुदक्षाणाम् ।
गणतन्त्रात्मकपद्धति रित्थं जागर्ति देशेऽस्मिन् ।
जनमानसनवतायां विपुलान् भावान् विलासयति ।

## २६-षड्विंशति पद्यात्मिका

———

विलयम शेक्सपीयरस्य षट् सोनेटानां संस्कृतरूपान्तरम्

## कालस्तथाऽनुरागः+

न चापि धातुर्न शिलाश्मखण्डाः,
न चाप्यनन्ता पृथिवी न सिन्धुः ।
मृत्योः प्रभावात्किल रक्षितुं क्षमाः,
स्वीयाँ स्थितिं हा ? परमं विचित्रम् ॥
यथा सुपुष्पस्य क्षणाय जीवितं,
तथैव सौन्दर्यमपीह चञ्चलम् ।
इयं कठोरा परमा ह्यनित्यता,
कथं स्तदेतत्प्रभवेत्स्वरक्षणे ? ॥

अहोऽस्थिरः ग्रीष्म - ऋतोर्विलासः,
कथं स्थिरः स्यान्मधुरोऽस्यहासः ।
नश्यद्दिनानां परितोऽस्ति व्यूहो,
न चास्ति मोक्षस्य कदाचिदाशा ॥
यतोहि दुर्जेयशिलाप्रसाराः,
न सन्ति दाढ्र्येन गुणेन युक्ताः ॥
न च दृढाः सन्त्यपि लोहद्वाराः,
कालो यदा सर्वविनाशहेतुः ॥

अहोमहद्भीतिरुदेति चित्ते,
यदा भवत्यस्य कदापि चिन्तनम् ।
किमस्य कालस्य सुशोभना जनाः,
कालस्य कालात्स्वसुरक्षणे क्षमाः ?
अथास्ति कश्चिद् बलवान्स हस्तः,
यो हस्तयेत् चञ्चलकालपादौ ।
कथं स कश्चिद् भुवि वर्तते जनः,
सौन्दर्यनाशे प्रतिबन्धको भवेत ?

न चास्ति नैवास्ति ऋते मदीयात् ,
सुलेखनीमन्त्रमहाप्रभावात् ।
यावत्स्थिरा साक्षरमन्त्रमालिका,
तावत्स्थिरा सा मम प्रेममूर्तिः ॥

\+ Time & Love

# तस्य प्रीतिं प्रति+

यदा यदाऽहं विगते हि काले,
समालुलोके सुषमाभरं तम् ।
सुकोमलानाँ किल कामिनीनां,
दिवं गतानाञ्च सुकामुकानाम् ॥
विख्यातिख्यातं मधुरं मनोज्ञ,
सुवर्णवर्णैरतिमञ्जुरञ्जितम् ।
अतीतकालीनमलीन काव्य–
स्वकान्तिकामं समशोभयत्सदा ॥

तदा तदाऽहं मधुरप्रभायां,
सुवर्णवर्णान्वितवर्णनायाम् ।
हस्तस्य पादस्य सुलोचनस्य
भ्रूवोस्तथा तद्वदिवापराणाम् ॥
मया सदैवाथ विचार्यते ते,
निः संशयेनैव स्वलेखनीघनाः ।
त्वदीयशोभाभरवर्णने क्षमा-
स्त एव नूनं कवयः पुराणाः

परन्तु तेषामुपवर्णनं
तन्मध्येऽनवद्या सुभविष्यवाणी ।
अस्त्यस्य कालस्य तु नः किलेयं,
त्वं वर्णितो नूनमसीत्यपाङ्गिः ॥
ततोऽपि यावल्लिखितं महात्मभि–
स्तत्सर्वमेवास्ति नु कल्पनाल्पा ।
न चापि तेषां किल शक्तिरासीत्वद,
गौरवाख्यापनयोग योग्या ।
अथाधुना सन्ति नु ये कवीश्वरा,
स्त्वद्गीतगाने कवयोऽप्यनीश्वराः ।
त एव साश्चर्यमथाप्यलौकिक,
त्वच्छौष्टवं द्रष्टुमथाप्ययोग्याः ॥

\+ To His Love

# विशुद्धं प्रेम+

मित्रद्वयी चात्र विवाहबद्धा,
मिथो न सा प्रेमविरोधिनी स्यात् ।
गते ऽथ सौन्दर्यं सुखेऽथवा चेत्,
प्रीतिः परा प्रीतिकरा च न स्यात् ॥
प्राप्ते विकारे ननु स्नेहपात्रे,
विकारमेवाश्रयते च यच्च ।
न चापि तत्प्रेम कदापि मन्ये,
दृढो मदीयः खलु निश्चयोऽयम् ॥
चिन्हं त्विदं स्थैर्यस्थितं सदैव,
सर्वं त्विद सत्यमवेहि नूनम् ।
यत्स्याद्यथापूर्वमथापि वा ते,
न चञ्चलं स्याच्च सदा कदापि ॥
आभासमानः खलु तारकोऽयं,
सामुद्रिकाँस्तान् खलु यानजातान् ।
यो ह्यस्त्यजन्मा सततं समेषां,
परन्तु ज्ञेयः स कियान्महान्वै ॥
रक्ताधराः कान्तकपोलवद्,घ
क्रमातिपातेन विवर्तयन्ति ।
न कालवत् प्रीतिरतीव मूर्खा,
या स्यादतथ्या परिवर्तिता च ॥
नैवास्ति स्नेहेऽन्यतमो विकारः,
सप्ताहहोराजनितः कदाचित् ।
प्रेमेति सत्यं स्थितिमन्नु तावद्यावत्-
प्रालेयक्षणः समेयात् ॥
कदापि चेत्सत्यमिद नहि स्या-
न्मदीयमान्द्यं-जनितं यदि स्यात् ।
न लेखनीं हस्तगतां करिष्ये,
न मानवः प्रीतिकरो भविष्ये ॥

+ True Love

# अपरिवर्तनीयम्+

अये!मनोहारि मया सुहृत्त्वम्
पुराणतापातयुतो ऽनुमीयसे ।
यथा मयाऽलोकि तवाद्य दर्शने,
तथैव सौन्दर्यखनिः प्रतीयसे ॥
समाययौ ग्रीष्म-ऋतुस्त्रिवारं,
संधारयित्वा मदमञ्जुहारम् ।
परं स्त्रिधैवागमितं हिमान्या,
ग्रीष्मस्य मानं हि विमर्दनाय ॥

सुशोभनो मञ्जुल मञ्जुलो मधु,
मया समालोकि गतो ऋतूनाम् ।
विहाय स्वीयां कमनीयतां त्रिधा,
विवर्तयन्सन्तत शैशिरे स्वम् ॥
त्रिधैव चैत्रस्य विचित्रितानि,
पुष्पाणि ज्येष्ठे ग्लपितानि नूनम् ।
परं त्वदीयः सुषमाभरीऽसौ,
यथा तदाऽसीदधुनाऽपि तद्वत् ॥

अहो ? तथापीदमभूतपूर्वं,
सौन्दर्यसिन्धु नंनु याति याति किम् ?
यथा घटीयन्त्रगतानुसूचिका,
भृशंचलन्त्यप्यचलैव दृष्टा ॥
अतस्त्वदीया महिमावतीयं,
कान्ति नं याऽतीव स्थिरा मदर्थम् ।
प्रयाति यात्येव हि सर्वमेव,
मदीय - नेत्राणि प्रतारयन्ती ॥

अतस्तु रे भाविसुकाल हे! हे,
सम्यक्त्वयैतत्परिचिन्तनीयम् ।
परा तु सौन्दर्यकरा विभूति-
स्त्वदागमात् पूर्वतरं न नश्येत् ? ॥

+ The Unchangable

# क्षतिपूर्तिः+

विधेर्विधानेन प्रपीडितोऽहं,
जनैश्च सर्वैरुपहस्यमानः ।
भृशं स्तदेवार्थमरोदमत्र,
विलोक्य स्वीयं शरणार्थिरूपम् ॥
चीत्कारशब्देन विभुं स्मरामि
परन्तु व्यर्थं बधिराय तस्मै ।
घृणा स्वकादेव ततोऽनुभूता,
शपामि दुर्भाग्यमहं स्वकीयम् ॥
आशा किलैका परिपूर्णपुष्टा,
मां धारयन्ती भृशमाविरासीत् ।
सौम्यातिसौम्यो नवरूपराशिः,
मदीयमित्र भुवि विद्यते सः ।
कला, सदैवास्य जनस्य पूर्णा,
सौन्दर्यराजेन हि तेन मानिना ।
स्वल्पोऽपि सन्तोषमना भवेय-
मानन्दपूर्णोऽस्मि तदीयशक्त्या ॥
यद्यप्युदासीनतया युतोऽहं,
समुद्गतैस्तैः घृणितैर्विचारैः ।
संयोगतस्त्वामनुचिन्तयेयं चेत्,
तदा मदीया सुदशैव चित्रा ।
यथा प्रभाते कलगीतिगानं,
करोति कष्णोऽपि पिको मनोज्ञम् ।
तथोपविष्ठे किल भूमिलोकाद,
गायामि नाके पवमानमन्त्रान् ॥
यतस्तु सर्वार्थमनोज्ञमेन,
गीतं त्वदीयस्मरणेन प्राप्तम् ।
ततश्च सर्वं परिवर्तयित्वा,
भवामि भयो नृपमण्डलेषु ॥

+The Compensation

# मृत्युस्तथा मरत्वम्+

स्मरामि साकं गणयामि चाहं,
घटींस्तु कालं किल ज्ञापयन्तीम् ।
तथानुपश्यामि प्रकाशपूर्ण-
मस्तायमानं दिवसं निशीथे ॥

यदा च पुष्पं परितः प्रफुल्लं,
पश्यामि कालेन गतेन शुष्कम् ।
तथैव कृष्णालकगुच्छकांस्तान्,
विवर्णितान् शंखसिते तु वर्णे ॥

यदा समृद्धं तरुमेवहीनं,
पश्यामि पत्रैर्हरितैः विहीनम् ।
आसीद्यदालम्बनमाश्रिताणां,
घर्मातुराणाञ्च किलातपत्रम् ॥

ग्रीष्मर्तु सौम्यं हरितञ्च शष्पं,
बद्धं नु सम्यक्सुपुलिन्दरूपे ।
लब्ध्वाजनि साश्रयिता चितेव.
शूकैश्च कूर्चैः सहितैः सिताभैः ॥

पृच्छाम्यहं त्वां तव रूपराशिः,
स्थास्यत्यनित्या किमु कालगत्याम् ?
तदुत्तरं मे त्विदमेव, मन्ये,
कालातिपातेन हि यास्यसि त्वम् ॥

सौन्दर्य - माधुर्यमिदं तु सर्वं,
स्वात्मानमग्ने विजहाति नूनम् ।
आपातमा याति तथैव शीघ्रं,
नैवास्ति लोके खलु शास्त्रमिदृक्,
कालस्य शस्त्रात् किल यन्नु रक्षेत् ।
आरक्ष्य स्वीयां कुलसन्तति त्वं,
कालीयशस्त्रस्य समानतायै ॥

+ The Death and Immortality

# परेषु शौर्यं खलुदर्शनीयम्

स्वकीयदेशे किल भारतेऽत्र
स्वतन्त्रतायाः सुप्रभातकाले ।
पञ्चाम्बुप्रान्ते हठधर्मिताया
न केन दृष्टं हि—अकाण्डताण्डवम् ॥

प्रसारमापुस्तरसा हि हिंसा
जनेष्वभद्रा किल साम्प्रदायिकाः ।
न भ्रातृभावं न सुहृत्प्रभावं
जनास्तदा चिन्तयितुं समर्थाः ॥

अस्यैव देशस्य तथा तथैव
पञ्जाबप्रान्तस्य विखण्डनेन ।
विनिर्मितं पाकिस्तानमासी–
त्तदापि म्लेच्छैर्हि दुराग्रहेण ॥

दुर्भाग्यदोषादथवा जनानाम्-
लोकाग्रणीनां च प्रशासकानाम् ।
पुनस्तदेवात्र—उदीयते स्म
दुराग्रहो यो हि विभाजने तदा ॥

क्वचित् – बमस्फोटनभीषणाग्निना
क्वचिद्भु शुण्डीगुलिकाप्रहारैः ।
क्वचित्कृपाणैस्तु कृपाविहीनैः
पञ्चत्वमापुर्हि जनाः खलानाम् ॥

क्वचिन्मठाः मन्दिरमूर्तयश्च
भ्रष्टाः खलानां च कुकृत्यजालैः ।
परस्परं यत्किल स्नेहमेलनम्
तच्चापि नष्टं हि - मतेन नूनम् ॥

इतश्च पञ्चाबुप्रशासनेन
कृता ह्युपायाः खलमर्दनाय ।
न शेकुरस्थायितयापि रोधने
हिंसास्तु निर्दोषजनस्य तत्र ॥

दत्तं स्वकीयं किल त्यागपत्रम्
कांग्रेसजनानां मन्त्रिमण्डलेन ।
समागतश्चापि ह्ययं प्रदेशः
प्रशासने राष्ट्रपतेस्तथैव ॥

प्रशासनं शोधयितुं नियुक्तः
केन्द्रेण नूत्नः खलु राज्यपालः ।
तेनापि नक्तञ्च दिवञ्च सेवितम्
परं न प्राप्तो विजयः खलेषु ॥

अकालयो वै स्वहठेन शाठ्यं
समाचरन्तः सतत प्रदेशे,
स्वधार्मिकस्थानमथापि स्वीयं
गुरोर्हिद्वारमपवित्रयन्तः ॥

प्रथक् प्रदेशस्य नु याचनान्ते
कुर्वन्ति केनापि दुराग्रहेण ।
अमेरिका - पाक - प्रशासनाभ्यां
प्रचोदिताश्चापि च मन्दबुद्धयः ॥

केन्द्रीय—आरक्षिबलप्रभावात् -
सीमासुरक्षादलरक्षणाभ्याम् ।
प्रतीयते शान्तिमुपेष्यतीति
पञ्चाम्बुप्रान्ते किल भारतस्य ॥

शिष्याः-भवेयुरुत हिन्दवो वा
एकैव मातुः किलसन्ततिव ।
मिथो न योद्धव्यमिहाथ भ्रातृभ्यां
परेषु शौर्यं खलु दर्शनीयम् ॥

— सम्पादकस्य

★

पञ्चनद प्रान्तप्रशासनेन सादरं पुरस्कृतानां श्रद्धेयानाम्

# आचार्यविश्वनाथमहाभागानां चरणयोः सरस्वतीपरिवारस्य

# अभिनन्दनपुष्पांजलिः

ऐहिकामुष्मिकान्भोगान्ग्राम्यांस्तुच्छतमान्भुवि
यो विजानाति तत्वज्ञस्तस्य वाचाभिनन्दनम् ।१।

संकल्पप्रभवा यस्य ऋषिकल्पस्य वाग्मिनः ।
संस्थेयं देशविख्याता विदुषां मानसायते ।२।

लब्धी मूर्तिर्महात्मा तेजसं सात्विकं वपुः ।
दर्शनं स्पर्शनं यस्य महापातकनाशनम् ।३।

अव्यक्तस्य महाविष्णोरंशिनः परमात्मनः ।
संकल्पो गुरुवर्यस्य माध्यमेन भुवं गतः ।४।

अमानी मानदो मान्यो निर्गुणस्य गुणात्मनः ।
नाम्ना लक्ष्यं भवानेव साक्षाज्जिष्णुर्महायशाः ।५।

सत्यं शौचं दया शान्तिः कारुण्यं वागनिष्ठुरा ।
शमो दमस्तपस्त्यागः श्रीमति प्राकृता गुणाः ।६

वर्धतां वर्धतां विद्वन्! भवानेतेन शर्मणा ।
मीमुदीमो वयं सर्वे संस्कृतोपासका जनाः ।७

—श्रीयशोदेव शर्मा, साहित्यदर्शनाचार्यः. सभास्थसरस्वतीपरिवारप्रतिनिधिः.
श्रीसरस्वती संस्कृतकालेज खन्ना (पञ्जाब)

# हिमाचलप्रदेशसंस्कृतशिक्षकपरिषद् सूचना

लाहौलस्पितिमण्डलसंस्कृतशिक्षकपरिषदो निर्वाचनम् सर्वसम्मत्या: श्रीप्रेमलालशास्त्रिण: परिषदो महामन्त्रिणोऽध्यक्षतायां अगस्त्य (१९८४) मासे सम्पन्न: ।

निर्वाचनस्थलम् कुल्लू

निर्वाचितसदस्या:

| | | |
|---|---|---|
| संरक्षक:—श्रीरामदत्त शास्त्री | रा. मा. पा. | चौखंग, लाहौल |
| प्रधान:—श्रीउधोराम शास्त्री | रा. उ. वि. | रेंगरीक, स्पिति |
| उपप्रधान—श्रीसतीशकुमार शा. | रा. उ. वि. | जाहलमों, लाहौल |
| महामन्त्री—श्रीवृजलाल शा. | रा. मा. पा. | चिचम, स्पिति |
| कोषाध्यक्ष - श्रीदेशराज शा. | रा. उ. वि. | ताबी, स्पिति |
| प्रचारमन्त्री—श्रीदेशराज शा. | रा. उ. वि. | शिशु, लाहोल |

अनया कार्यकारिण्या: समस्तमण्डले अमरभारत्या। प्रचारप्रसारमधिकृत्य संस्कृतशिक्षकाणां च समस्यासमाधानाय प्रदेशपरिषद: सहायता सर्वदा करिष्यते इति प्रतिज्ञातम् । निर्वाचनस्य प्रतिज्ञायाश्च प्रतिलिपय: संरक्षकमहाभागेभ्य: श्रीआचार्यदिवाकरेभ्यस्तथा महामन्त्रिणे केलंगस्थमण्डलशिक्षाधिकारिणे मण्डलस्थसबंमुख्याध्यापकेभ्य: उ.विद्यालयानाम् ।

★

हि.प्र.सं.शि.परिषद:सोलनमण्डलांतर्गतअर्कीउपमण्डलनिर्वाचनम्.

निर्वाचनमिदं गतजूनमासे कुनिहार रा.उ.पाठशालायाँ सम्पन्नम् ।

पदाधिकारिण:

| | | |
|---|---|---|
| प्रधान—श्रीपद्मचन्द्र शा. | रा. उ. पा. | कुनिहार |
| उपप्रधान—श्रीरामलाल शा. | रा. उ. पा. | बलेरा |
| महासचिव—श्रीरवीन्द्रनाथ शा. | रा. उ. पा. | कुनिहार |
| सहसचिव —श्रीदिनेशकुमार शा. | रा. मा. पा. | बसंतपुर |
| कोषाध्यक्ष —श्रीलक्ष्मीनन्द शा. | रा. मा. पा. | घणागुघाट |
| प्रचारमन्त्री—श्रीचमनलाल शा. | रा. उ. पा. | भूमती |
| मण्डलप्रतिनिधी—श्रीबोधराम शा. | रा. मा पा. | सूरजपुर |
| श्रीआज्ञाराम शा. | रा. उ. मा. पा. | धुन्दन |
| का,का·सदस्य —श्रीमनोहरलाल शा. | ,, | ,, |
| श्रीरामचन्द्र शा. | रा· मा. पा. | कुनिहार |

# मे कर्मचारि-शकटम्

## लोकनाथ मिश्र

— शास्त्री ओ० टी० प्रभाकर

बधात्प्रसूतासुर रावणस्य, या ब्रह्महत्या खलु रामचन्द्रे ।
मुक्त्वा तपोभिः शुभगाँगतीरे, स्थितोऽत्र तं नातलिनं स्मरामि । १

त्रिंशब्दवर्षैः कृता सेवा, नाना विद्यालये मया ।
शिक्षाविभागे छात्राणाम् , पाठनं प्रीतिपूर्वकम् । २

प्रारम्भ बाही विद्यालये तु, ततस्तु वै कोटल बेढ संज्ञे ।
निर्मण्डके नित्थरमध्यकाले, सेवानिवृत्तोनिर्मण्डतश्च । ३

त्रिंशद्वत्सरकैः प्रकल्पितमिदं स्वध्यापनं जीवने,
मुख्याध्यापकसज्जनैः मयि सदा घतानुकम्पा परा ।
अन्यैः पाठकबन्धुभिः सुविहित कार्येऽनुदानं मम,
इत्थं मेऽद्य सुकर्मचारि – शकटम् कम्पद्गतं स्थानकम् । ४

मे कर्मचारित्व सुजीवने तु, विद्यालयाख्यमिव भ्रमन् हि ।
साधून साधून मनुजस्य शब्दान्, शृण्वन्ध्वनीस्तु पशुपक्षिणामिव । ५

विद्यार्थिनां चापि सुपाठकानाम्, सम्पर्कमासीत्तु वनस्पतीनाम् ।
आरुह्यकक्षा परिणामकालम्, प्राप्ता हि सेवा विनिवृत्तिवेला । ६

आरूढवानस्मि विशालजोतम्, सीमावरोहत्त्य इतोऽवरब्धा ।
गच्छन् हि चास्मिन्नवशेषकाले, जानामि नाहं स्खलन कदा स्यात् । ७

नौका मे ततुंकाना लघुतर सुतरां कर्मचारित्वरूपा,
नाना विद्यालयानां भ्रमरजलनिधौ, मज्जयन्तीतरन्ती ।
झंझावातस्य वेगे सुख दुःखमिलितं कालयोगं सहन्ती
सेवाकालस्य चान्ते तटमिव सुपता साम्प्रतं सुस्थिरोऽहम । ८

कच्छायुक्तेन सरोवरेण विद्यालयस्तुल्य इतीह मन्ये ।
संधौ भवन्त्यत्र ककुप्चतुष्कं: वर्षा जलैर्वा सममेव छात्राः । ६

वाष्पीययानानि स्थाने स्थितानि, पंक्तौ स्थिताः भान्ति तथैव छात्राः ।
यातेषु यानेषु विभाति स्थानकम्, छात्रेषु यातेषु तथैव प्रांगणम् । १०

विद्यालयोद्यान समं हि मन्ये संरक्षकाः सन्ति सुपाठकाश्च ।
लोकैः समागम्य विभिन्न ग्रामात्, पुत्रांकुरास्तैरिह रोपिताः वै । ११

शाखा प्रशाखाः बहिरागताः याः, संरक्षकास्ताः परिकर्तयन्ति ।
अध्यापकश्चापि ददाति दण्डम्, तत्रापराधो न सुगण्यते वा । १२

छात्राः न पाठितोऽत्रेह वयमेव सुपाठिताः ।
छात्राः न ताडिताश्चापि वयमेव सुताडिताः । १३

छात्राः न बोधिताश्चैव वयमेव प्रबोधिताः ।
निःसारिताः न वै छात्राः वयमेव निःसारिताः । १४

छात्राणां मुखदर्शनेन सततं, कैशोर्यमारोपितम्,
सोत्साहेन च यापितं क्षणमिदं, बालैः सहालापयन् ।
सेवाकालनिवृतिरूप-भ्रमले, चादर्शके साम्प्रतम्,
प्रेक्षित्वाह्यनुभूतिमागतमिदं वार्धक्यरूपं मम । १५

विद्या बुद्धि बलैर्युताः बटुवराः सच्छीलवन्तोऽपि च ।
युष्माकं सततं भवेद्गुणमयं सेवारतं जीवनम् ।
गाम्भीर्येण समाजदूषणहराः शान्तेश्च संस्थापकाः ।
इत्थं मे शुभमाशिष प्रियवराः लब्ध्वा चिरं जीवत । १६

शर्मा श्री जगदीशरामसहितैः सत्पाठकैः सम्मतः ।
साहाय्यं सुतरां कृतं मम सदा ज्ञात्वा हि मामल्पधीः ।
अग्रे चापि न मामका स्मृतिरिह त्याज्या भवद्भिः कदा ।
दातव्यं ह्यनुदानमेव करणे पश्चाहमावेदये । १७

नन्दे गुणे च विंशत्यां वैक्रमे मार्गशीर्षके
पूर्णिमाभौमवारे च निवृत्तो लोकनाथकः । ।१८।

—●—

काव्यशास्त्र विनोदेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणाँ निद्रया कलहेन वा ॥

# सम्पादकीयम्

## नववर्षाङ्कः

गतवर्षाणीव-इदानीमपि नववर्षारम्भो भवति अर्कतोवरमासाङ्केन साकम् । एषोऽङ्कश्च भवतां सेवायामुपायनी क्रियते सादरं सविनयञ्च । सर्वेऽपि दिव्यज्योतिषः पाठकाः लेखकाश्च पूर्ववत् सहयोगदानाय प्रार्थ्यन्ते । पूर्ववर्षेषु च यो हि सहयोगो भवद्भिर्दत्तस्तत्कृते स्वकृतज्ञतां ज्ञापयामि ।

## संस्कृतस्य वर्तमाना स्थितिः

यद्यपि संस्कृतस्य स्थितिर्विशेषोत्साहवर्धिका न वर्ततेऽद्य तथापि निराशाप्रदापि नास्ति । यतोहि वर्तमानकेन्द्रीयशासनं प्रान्तशासनानि वा अस्माकं स्थित्यनुसार संस्कृतं प्रति—उदासीनानि न सन्ति । परन्तु वयं स्वयमेव तथा दीना किं कर्तव्यविमूढा, बहुतर-स्वार्थलिप्ताः, संस्कृतभाषाप्रसारप्रचारार्थं न किमप्याचरन्तः, संस्कृतं पठित्वापि संस्कृत-भाषणे, वयं संस्कृतज्ञा वा इति ज्ञापने च परमलज्जापराः संस्कृतभाषा कृते न किमपि कुर्वाणास्तिष्ठामः । अहं भारतमात्रस्य न केवलं हिमाचलस्यैव वार्तां करोमि । सर्वोऽपि सस्कृतसमाजस्तथा निष्क्रियः सञ्जातोऽस्ति येन महत्त्वपूर्णकार्याणि क्रियमाणानि सस्कृत क्षेत्रे न कामपि प्रशंसां प्रगतिं वा प्राप्नुवन्ति ।

## संस्कृतचलचित्रम्

यद्यपि कैश्चन महानुभावैः परमोत्साहपूर्वकं संस्कृतचित्रनिर्माणमकारि परन्तु संस्कृतसमाजस्योपरि अस्यापि प्रभावो न दृष्टः भारतस्य सर्वा अपि संस्कृतसंस्थाः किमु सर्वेषु प्रान्तेषु संस्कृतचलचित्रप्रदर्शनाय स्वस्वप्रशासनानि प्रार्थयामासुः ? कृताः काभिरपि संस्थाभिः—अत्र केऽपि प्रयासाः । ते तु वराका अन्यभाषाचलचित्रदर्शने एव निमग्नाः । अत्र संक्षेपेण पुनरपि संस्कृतज्ञान् प्रार्थये यद्भवद्भि । संस्थारूपेण एकत्रीभूय संस्कृतपत्राणि क्रेयानि पठनीयानि दूरदर्शनोपरि संस्कृतस्य कार्यक्रमा आधिक्येन स्युः संस्कृतेऽन्यचित्राणि—अपि निर्मितानि स्युरित्येतदर्थं प्रयासाः करणीयाः दुःशकं किमपि नास्ति । आशासे संस्कृतजगत्—स्वीयां स्थितिं सुधारयिष्यति जागरूकश्च भविष्यति स्वभविष्यं प्रति ।

— केशव शर्मा

★

R. N. 6384/57 Registered No. 10

श्री शशि कान्त शर्मा, शास्त्री
राजकीय विद्यालय, हारसी-काँगड़ा
(हि. प्र.)

## प० हि हा० सै० स्कूल रोपड़स्थ संस्कृतछात्रपरिषदः अध्यक्षः महामन्त्री च

कुमारी सुजाता शर्मा,
कक्षा १०, (महामन्त्री)

श्री सुनील कुमार सोफतः,
कक्षा १० (अध्यक्षः)

हिमाचलप्रदेश — पंजाब- हरियाणा-जम्मूकश्मीरमध्यप्रदेश — राजस्थान—महाराष्ट्र
उत्तरप्रदेशशासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।

## पत्रस्य उद्देश्यानि तथा नियमाः

सरल-सरस-सुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक—अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशितं भवति ।
पत्रस्य वार्षिक मूल्यं २० रु० अर्धवार्षिकं १५ रु० एकस्याङ्कस्य च रु० १-७५ भवति।
वर्षारम्भः आश्विन—मासतः भवति । ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति ।

ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोबरा, शिमला-१७१००७ हि. प्र." इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

निदर्शन-अङ्कस्य (नमूना) प्राप्तये २/- रु० मूल्यं प्रेषणीयम् ।
"दिव्यज्योतिः" प्रतिमासं सम्यक्—निरीक्ष्य प्रेष्यते । यदि कश्चित् अपि ग्राहकः पञ्चविंशति-दिन यावत् पत्रं न प्राप्नुयात् तर्हि स पत्रालयात् तत् कारणं जानीयात् । उत्तरपत्रम् (जवाबी कार्ड) प्रेषणीयम् यदि कार्यालयात् किमपि ज्ञातव्यं भवेत् ।

सुयोग्याः लेखकाः स्वपरिष्कृताः स्तम्भसम्बन्धिताः रचनाः एव प्रेषयेयुः । प्रेषितरचनायाः प्रतिलिपिः लेखकैः स्वपार्श्वे संरक्षणीया एव । यतोहि कार्यालयस्तदुत्तरदायित्वं न वहति ।

अस्वीकृताः रचनाः प्राप्ते डाकव्यये एव प्रतिनिवर्तयिष्यन्ते ।

कस्या अपि रचनायाः प्रकाशनाप्रकाशनयोः तथा संक्षेपसम्वर्धनादि-अधिकाराः सम्पादकाधीनाः । प्रकाशनार्थं प्रेषिताः रचनाः कर्गलस्य एकभागे सुस्पष्टाक्षरैर्विलिख्य प्रेष्याः ।

———

## परिचयः

संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, दूरभाष : 3859
प्रधानसम्पादकः— प्रा० केशव शर्मा एम. ए., एम. फिल, साहित्यरत्नम्, „ 8-200
दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-७ (हि.प्र.)

मुद्रकः प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि.प्र.)
स्वामी :—श्रीमती आचार्य रत्नकुमारी शर्मा

## विषयानुक्रमः


| सं० | विषयः | | लेखकः | पृष्ठ |
|---|---|---|---|---|
| १. | प्रधानामात्यायाः | ... | ... | २ |
| २. | आचार्याणां श्रद्धाञ्जलिः | | ... | ३ |
| ३. | मुख्यमन्त्रिणः ,, | ... | — | ५ |
| ४. | संस्कृतम् | — | — | ६ |
| ५. | शस्त्रास्त्र | — | ... | १० |
| ६. | प्रख्याता | ... | ... | ११ |
| ७. | युवजन | — | ... | १२ |
| ८. | निर्व्यूह | ... | ... | १३ |
| ९. | बंगभंग | — ... | — | १४ |

# भारतस्य प्रधानमन्त्रि श्रीमती इन्दिरा गान्धी तस्या एव रक्षकैः गुलिका वर्षणेन निहिता

## जघन्योऽयमपराधः बलवन्तसिंह सतवन्तसिंहाभ्यां कृतः ।

---

## स० शो० संस्थाने भारती बिहारे विदुषां नागरिकाणाञ्चः शोकसभा

---

भारतस्य नूतनः प्रधानमन्त्री श्रीराजीवगान्धी सर्वसम्मत्याः सिंहासनारूढ़ः ।

दिव्यज्योति परिवारः शोकमग्नोऽपि भारतस्य नूतनप्रधानमन्त्रिणः स्वागतं करोति ।

## चम्बा संस्कृतअध्यापकपरिषद्

प्रधान—श्री राम शरण पाठक शास्त्री

महासचिव—श्री सूरतराम शर्मा दर्शनाचार्य

उपप्रधान—श्री ओम प्रकाश शास्त्री

कोषाध्यक्षः—श्री सुखलाल शास्त्री

प्रचार सचिव—श्री कृष्ण राम शास्त्री

कार्यकारिणी सदस्या :—

१. श्री पूर्णचन्द शास्त्री
२. श्री प्यारू राम साहित्याचार्य
३, श्री कृष्णचन्द्र शास्त्री
४. श्री ज्ञानेन्द्र शास्त्री
५. श्री मेघनाथ शास्त्री

# श्रीमती इन्दिरा अष्टोत्तर शतनाम स्तोत्रम्

३१-१०-८४ दिने भारतराजधान्यां प्रधानामात्यायाः स्वनामधन्यायाः श्रीमत्या इन्दिरा गान्धी महाभागाया गुटिका प्रहारेण जातस्याकस्मिक वैकुण्ठवासावसरे भारतस्य दुर्भाग्यपूर्ण वेलायाँ पू. पा. श्रीमदाचार्य दिवाकरदत्त महाभागानाँ सं. शोध संस्थान संस्थापकाध्यक्षाणां :—

## श्रद्धाञ्जलिः

विष्णुलोकात्समायाता रमा मानुषविग्रहा ।
जवाहरसुता सेयं इन्दिरा प्रियदर्शिनी ।१।

कमलागर्भसम्भूता लोकरक्षणहेतवे ।
त्रिवेणी—सङ्गमे पुण्ये तीर्थराजे सुविश्रुते ।२।

एकैव केवलं जाता साक्षाच्छक्तिस्वरूपिणी ।
भारतस्य महामात्या कृत्वा शासनमद्भुतम् ।३।

ब्रह्मवेदाधिके वर्षे द्विसहस्राब्दवैक्रमे ।
कार्तिकस्य सिते पक्षे बुधवारे दिने शुभे ।४।

गोपाष्टमी — समायुक्ते श्रवणर्क्षसमन्विते ।
राष्ट्रैक्यभङ्गदुःखेन दुःखिता कमलानना ।५।

गुटिप्रहारव्याजेन पार्थिवं तनुरत्यजत ।
भारता मानवाः सर्वे श्रृण्वन्तु मम भाषितम् ।६।

नेयं मृता महादेवी विष्णुलोकं गता मुदा ।
विष्णोरर्धाङ्गिनी नित्यं अमरा तत्र तिष्ठति ।७

देव्यास्तस्यास्तु संवच्मि अष्टोत्तर शताह्वयम् ।
महास्तोत्रं परं दिव्यं पठन्तु सततं मुदा ।८।

इन्दिरा सुन्दरी गौरी सुनसा कमलानना ।
मीनाक्षी सुदती चैव बिम्बोष्ठी मधुरस्वरा ।९।

कम्बुकण्ठा सुकर्णा च सुकेशी लम्बमूर्धजा ।
विशालमस्तका भव्या सर्वदा प्रियदर्शिनी ।१०।

कम्रभुजलता चैव मृगराजकटी प्रिया ।
ताम्रहस्ततला चैव लम्बसूक्ष्मकराङ्गुली ।११।

ऊर्ध्वरेखाङ्कितपदा मनोज्ञा गजगामिनी ।
विद्याविशारदा चैव कुशला च कलावती ।१२।

सर्वधर्मप्रिया चेय कृषकापालिका तथा ।
विश्ववन्द्या महामान्या विश्वकल्याणकारिणी ।१३।
राजीवजननी चैव सर्वसङ्कटनाशिनी ।
संगीतरसिका चाथ नृत्यवाद्यविलासिनी ।१४।
हिमाचलप्रिया नित्यं सदा हंसमुखी तथा ।
हास्यप्रिया तथा चापि सम्प्रोक्ता दुष्टदाहिनी ।१५।
लोकानां दुःखसंहर्त्री भारताखण्डकामिनी ।
सुरम्या वृत्ति दात्री च दरिद्रासेविका तथा ।१६।
वीराङ्गना खेलाप्रिया विद्युद्दोहनतत्परा ।
समाजसेविका चेयं ज्ञानविज्ञानपोषका ।१७।
हरिजनानन्ददात्री श्रमिकाश्रमहारिणी ।
राष्ट्रमाता परा दिव्या दाधीचव्रतधारिणी ।१८।
अन्नपूर्णा भूमिदात्री सर्वभाषासुसेविका ।
धनदात्री सौख्यदात्री दुष्टगर्वविमर्दिनी ।१९।
अबला सबला कान्ता सम्प्रोक्ता विश्वमोहिनी ।
बालप्रिया तथाचेयं धर्मसंस्थानपूजका ।२०।
कामदा संस्तुता पुण्या सर्वामयविनाशिनी ।
जननी संजयस्येयं तथा भुवनसुन्दरी ।२१।
वत्सला परमाशुक्ला शिवा सत्यपरायणा ।
विनम्रा च सुवस्त्रा च राष्ट्रक्षणतत्परा ।२२।
रक्ताद्गयताकेयं भारतामृतवल्लरी ।
स्वसुखोपेक्षणी चैव सर्वदुःखविखण्डिनी ।२३।
जितक्रोमा जितक्रोधा सम्प्रोक्ता त्यागविग्रहा ।
हतशत्रुबला चापि तथा चाभयदा मता ।२४।
त्यक्तलोभा सुसन्तुष्टा मदमोहविवर्जिता ।
साहित्यरसिका नित्यं सर्वविद्याविनोदिनी ।२५।
आनन्दभवने जाता दुष्टानन्दविवर्जिता ।
गुडाकेशा महाभीमा कमलाङ्गसमुद्भवा ।२६।
समस्तनीतिनिपुणा व्याख्यात्री लोकरञ्जनी ।
दीननाथा गुणज्ञा च सरला कान्तविग्रहा ।२७।
चन्द्रप्रभा तथा चेयं नित्यं रुद्राक्षधारिणी ।
शिवाज्ञया इदं प्रोक्तं इन्दिरायाः शताष्टकम् ।२८।
नित्यं प्रातस्तथा सायं ये पठिष्यन्ति मानवाः ।
दुःखदारिद्र्यनाशः स्यात् देशभक्तिः प्रवर्धते ।२९।
यावत् भारतवर्षं स्यात् यावत् विन्ध्य हिमाचलौ ।
इन्दिराचन्द्रिकास्तावत् यावत् चन्द्र दिवाकरौ ।३०।

# हि० प्र० मुख्यमन्त्रिणः श्री वीरभद्रसिंहस्य श्रद्धाञ्जलिः

भारतस्य प्रधानामात्याया: हत्योपरान्तं हिमाचलस्य मुख्यमन्त्रिणा श्री वीरभद्रसिंहेनोक्तम् – देश— प्रदेशव्यापिरवीये आकाशवाणीसन्देशे अद्य न केवल हिमाचल:, भारतमेव वा शोकमग्नावपितु निखिलविश्वस्य शान्तिप्रिया: जना: भृश दुखिता: सन्ति ।

जघन्योऽयमपराध: । अद्य आवश्यकता वर्तते यदस्माभि: सर्वै: सम्भूय स्वदेशे भ्रातृभाव: समुत्पादनीय: । हिमाचलस्येयं परम्परा यदत्र विभिन्न-धर्मिणो विभिन्नभाषाभाषिण: जना: चिरात् एकपरिवाररूपेण वसन्ति । तथैवाग्रेऽपि निवसितव्यं सर्वै: ।

श्रीमती इन्दिरागांधी हिमाचलेन साकं हार्दिकरूपेण सम्बद्धा आसीत् । प्रदेशेन यदा पूर्णराज्यत्वमवाप्तं तदा सा भीषणेऽपि हिमपाते शिमला-नगरस्य (रिज) शिखर क्षेत्रे दिल्लीत: समायाता । सम्बोधितश्च विशाल: जनसमूहोऽत्र । नवोम्बरमासे तया पुनरागन्तव्यमासीत् ।

इति प्रतिवचनं दत्तमभूत् । किन्नौरमन्डलपर्यन्तं गमनस्य कार्यक्रम: निर्धारित: आसीत् परन्तु हा हन्त ? सा इत: पूर्वमेव हिंसकै: अस्माकं सकाशात् — लुण्ठिता ।

इदानीं दिवंगतात्मानं प्रति शोकमुद्भावयन्तो वयं तया प्रारब्धकर्माणि पूरयितुं सन्नद्धा भवेम इत्येवावश्यकम् । न जाने स्वगमनात् एक . दिनपूर्वमेव तया कथं कथितम्—"यदि मदीया हिंसा भवति तदा मम रक्तस्य प्रत्येकबिन्दु: महत्वपूर्णं सेत्स्यति..." इति । एवं विध-महात्मनां विचित्ररूपा: खलु चित्तवृत्तय:

# संस्कृतं प्रति स्व. भारत-प्रधानामात्याया

## श्रीमती इन्दिरा प्रियदर्शिन्याः स्नेहादरौ

यद्यपि भारतस्य प्रधानमन्त्री विभिन्न-कार्यकलापेषु विविधसमस्यासु--अहर्निशं व्यस्तसमस्तास्तिष्ठति। इन्दिरा महाभागायाः प्रशासनकाले अपि देशः परितोऽनेककष्ट घटाटोपैराच्छादित आसीत्। सा नितान्तं व्यस्ताऽपि अ० भा० संस्कृतसाहित्यसम्मेलनस्याध्यक्षतां स्वीचकार यदा तया भारत-प्रधानमन्त्रिपदं १९६६ वर्षेऽलङ्कृतम्।

सा काले २ संस्कृतसंस्थासु अपि गतवती। अस्मिन्नेव प्रसङ्गे सा गतख्रीष्टाब्द एव सम्पूर्णानन्दसंस्कृतविश्वविद्यालयसमारोहे समुपस्थिताऽभूत्। संस्कृतज्ञानाञ्चोत्साह वर्धयामास।

१९७० ख्रीष्टाब्दे सा अ० भा० सं० साहित्यसम्मेलनार्थं स्वसन्देशम-प्रेषयत्। "संस्कृतस्योत्थानाय संस्कृतज्ञः सहयोगो देयः यतोहि संस्कृतेऽस्माकं सांस्कृतिकसौन्दर्यं परिलक्ष्यते। संस्कृतसाहित्ये कलाविज्ञानयोः कोषस्तथा महीयानस्ति येन केवलं न भारत एवापितुसमस्त ससारे संस्कृतस्य महत्त्वमस्ति।

★

# विदेशेष्वपि सा संस्कृत-ध्वजमान्दोलयत्

बंगला देशसमस्यां प्रति विश्वजनमतजागरणार्थं श्रीमती इन्दिरा गान्धी विभिन्नदेशानां यात्रामकरोत्। एषु देशेषु अमेरिका-ब्रिटन-फ्रांस-जर्मनी-एते

प्रमुखा: आसन्। जर्मनदेशे प्रधानामात्मायाः महीयान स्वागतः समजनि। बोनविश्वविद्यालयेन तदानीं प्रियदर्शिन्यै वाचस्पतिरुपाधिः- सम्मानार्थं प्रदत्ता। तत्र श्रीमती इन्दिरया कथितं यत् संस्कृतमस्माकं संस्कृतेः सभ्यतायाश्च भाषा वर्तते। परन्तु मध्यकाले यत् सर्वमस्माभिः विस्मृतमासीत्तत् जर्मनदेशस्य पण्डितैः-अनेक-काठिन्य सहनपूर्वकमन्धकारे निपतितं संस्कृत-साहित्यं समन्विष्टं विश्वस्य समक्षं च संस्थापितम्। न केवलं विश्वस्यैवापितु - अस्माभिरपि संस्कृते निहितं ज्ञानं जर्मन संस्कृतविदुषां कृपया प्राप्तम्। अतः जर्मनीयाः संस्कृत पण्डिताः मम सम्मानार्हाः सन्ति।

# संस्कृतजगति इन्दिरां प्रति स्नेहादरौ

यथा किल भारतस्य विभिन्नजातिषु समुदायेषु च स्व० प्रधानामात्मायाः आदरः आसीत्तथैव संस्कृत समाजेऽपि तस्याः भूयानादरः आसीत्। संस्कृतज्ञास्तां स्निह्यन्ति स्म। उदाहरणरूपेण संस्कृतकवियुगलस्य काव्याभ्यां काश्चन पङ्क्तयः प्रस्तूयन्ते :—

स्वदेशस्य दीनां दशां भारतस्य
विभाव्येति खिन्ना दयाक्लान्तचित्ता।
प्रतिज्ञां व्रतं देशरक्षार्थमाधात
करिष्ये ह्यदीनान् - जनान् - भारतीयान्॥

समाकर्ण्य भो घोषणामिन्दिरायाः
विशिष्टे प्रधाने पदे संस्थितायाः
जना दीनवर्गस्य रक्तेन पुष्टा
मृता हा! विभीता बुभूवुर्धनान्धाः॥

प्रशस्तस्त्वदीयः प्रबन्धः सुभातः।
स्वदेशे प्रशस्ता सुनीतिस्त्वदीया।
विदेशीयनीतिं त्वदीयां समीक्ष्य
जनाः मन्त्रमुग्धाः भवन्ति स्मितास्याः।

त्वमेवासि साक्षात् स्वराज्यस्य लक्ष्मी-
विभूतिः परा त्वं स्वदेशेऽद्वितीया।
सुनीत्या तवार्ये ! भवन्ति ह् यद्यावो
विदेशीयलोकाः सुकृत्यैस्त्वदीयैः ॥

त्वया बङ्गदेशो ह्यकारि स्वतन्त्रः
सुनीत्या स्वशक्त्या च हे लोकमातः।
सुकार्ये तवेऽस्मिन् जना बङ्गजाला:
कृतज्ञा जयं ते सदा कामयन्ते ॥१

—

भूमिहीनैः धरा मातृवल्लभ्यताम्
श्रेष्ठिवर्गो मनाक् वैभवात् क्षीयताम्।
न्यायउत्कोचलभ्यः चिरम् नश्यताम्
इन्दिरा सुन्दरी भारते गीयताम् ॥

यन्त्रजालैः समुद्योग उन्नीयताम्
यन्त्रकारः प्रभावः सदा बध्यताम्
भिल्लगेहेऽपि विद्युत्समुद्दीप्यताम्
इन्दिरा सुन्दरी भारते गीयताम् ॥२

---

१. राज्यलक्ष्मीः- इन्दिरा, काव्यम् श्री हजारीलाल शास्त्री,
दिव्यज्योतिषः- विभिन्नाङ्केषु प्रकाशितम्।
२. इन्दिरा सुन्दरी–काव्यम्, चन्द्रदत्त जोशी सोलन,
दिव्यज्योतिः अक्तूबर १९७१ अं[illegible]र्षम् १६

# स्वतन्त्र-भारते अभूतपूर्वः वेद-पूजामहोत्सवः

न. दिल्ली—"समाना हृदयानि वः । इति आधुनिकस्य युगस्य मन्त्र: वेदैः प्राचीन-काले विश्व-मानवाय श्रावितः । वेदाः न केवलम् आत्मविचारपराः सृष्टिज्ञान-प्रतिपादका: वा, परं तैः मानवस्य लौकिकं जीवनम् अत्युन्नतं संपादयितु सर्वप्रथमं विश्व-मानवाय दिव्य-तत्त्व-सदेशः दत्तः । एतेषां वेदाना प्रसारः स्त्रीजनेषु बहुजन-समाजे च अत्यावश्यकः" इति निवेदितवती महामात्या श्रीमती इन्दिरा गान्धी। रामनवमी-पुण्य-दिने वेदप्रतिष्ठापना-महोत्सवे पूज्यैः प्रज्ञाचक्षुःश्रीगङ्गेश्वरानन्द-स्वामिचरणैः संयोजिते ।

---

## उपकारकं वेद-विद्या-संवर्धनम्

वेद-चतुष्टयी नाम भारतस्य राष्ट्रियः ज्ञान-निधिः । प्रज्ञा-लोकः अस्य ज्ञानभण्डारस्य देशे विदेशेषु च प्रसारः प्रयत्नेन सर्वैः कर्तव्यः । मम तातचरणाः संस्कृताभिमानिनः । वेदविद्यायां बद्धादराः । मम अपि वेदविषये महती जिज्ञासा । मया आङ्ग्ल-माध्यमेन यथामति वेदविषये परिचयः संपादितः । लोकेषु राष्ट्रैक्यं समानतां सामञ्जस्यं च प्रसारयितुं महान् उपकारः स्यात् वेद-विद्या-संवर्धनेन"

# शस्त्रास्त्रनिर्माणे स्वावलम्बता

श्रीमती इन्दिरा गान्धी स्वप्रधानमन्त्रित्वकाले देशस्यसुरक्षासंसाधनेऽपि सततं स्मरणीयप्रयासानकरोत् ।

# विभिन्नवायुयानानि

तयाऽनुभूतं यत् शक्तिशालिदेशाः सर्वदा शस्त्रास्त्र-दृष्ट्या निर्बलदेशान्नाशयन्ति । तस्मात्-स्वतन्त्रतारक्षायै तया बहुशः प्रयासाः कृताः रक्षासंसाधनेषु च देशः स्वावलम्बी कृतः ।

भारत-जलपोतः-विक्रान्तः यस्योपरि बहूनि बहूनि वायुयानानि स्थातुमुड्डयनं कर्तुञ्च प्रभवन्ति । जलस्थलनभसेनाः सर्वतोभावेन तया सज्जीकृताः ।

## प्रख्याता शिमलासन्धिवार्ता:

### १९७७ तः पूर्वं शिमलानगरे पाकस्थानेन साकं भारतस्य सन्धिवार्ता सञ्जाता ।

अनेनैव प्रसङ्गेन शिमलास्थ-भवनोद्याने-भ्रममाणा श्रीमती इन्दिरा गान्धी

साकं वर्तते तत्कालीन: पाकस्थानस्य प्रधानमन्त्री श्री जुल्फिकार अली भुट्टो यस्य वधः पाशबन्धेन जातः तद्देशे। वर्तमानो राष्ट्रपतिः जिया तदादेशं दत्तवान् ।

# युवजनप्रिया श्रीमती इन्दिरा गान्धी

अस्य चिन्हस्य नीचै: भारते प्रथमवारं एशियाद्वीपस्य विभिन्न-राष्ट्राणां युवजनक्रीड़ा-प्रतियोगिता एवं विध- विशालरूपेण-योजिताऽभूत् अत एव सा विश्व-युवजनप्रिया तेषाँ कल्याणकर्त्री च आसीत् ।

## नेहरूक्रीड़ागृहम्

भारतस्य प्रथमप्रधानमन्त्रिणा एव एशियाद्वीपस्य युवजन-क्रीड़ाप्रतियोगितारंभ: कृत आसीत् देशस्य स्वतन्त्रताया: पश्चात् । तस्य स्मृतावेव दिल्लीमहानगरे नेहरूक्रीड़ागृहनि-र्माणं कृत्वा विश्वस्य प्रसिद्धतमक्रीड़ागृहेष्वेकोऽयमिति भारतस्य गौर-वाय वर्तते ।

**एतत्सर्वं श्रीमती इन्दिरया कल्पितं पूरितञ्च ।**

**अहो खलु भाविसन्ततिकृते तस्या स्नेहबाहुल्यम् ।**

## निर्व्यूहराष्ट्राणामध्यक्षाणां सर्वोच्चसम्मेलनम्

## दिल्लीनगरे समायोजितम्, श्रीमतीइन्दिरायाः अध्यक्षतायाम् :-

अस्य निर्व्यूहस्य नोचे: १९८३ ख्रीष्टाब्दे इदं निर्व्यूहराष्ट्राणाँ महाधिवेशनम् सफलतया जातम् । अस्मिन् महाधिवेशने किल शताधिकराष्ट्राध्यक्षैः भागो गृहीतः ।

"अर्थस्य सर्वे वशाः" इति नयं परिलक्ष्य तथा विश्वस्य धनिकदेशानां साहसेन साक्षात्कर्तुं तथा [illegible] लक्ष्यमासीत् आर्थिकव्यायाम-परिवर्तनम् । येन धनिकदेशाः स्वकीयानुचितप्रभावं न पातयेयुः विकासशीलदेशेषु तेषां विकासमेव [illegible] विनाशयेयुः ।

क्यूबादेशस्य राष्ट्रपतिः श्री कास्त्रो पूर्वम् निर्व्यूहराष्ट्राणामध्यक्षः—आसीत् । इदानीं श्रीमती इन्दिरागान्धी अध्यक्ष-पदमलंकरोत् । नानया पदमिदमलंकृतमेवापितु विश्वशान्तिनिरस्त्रीकरण—आर्थिकस्वातन्त्र्य - कृते चाहर्निशमतिशयप्रयासाः कृताः । निखिलेऽपि विश्वेऽनेन भारतस्य मानं मध्याह्नकालीनसूर्यवत् प्रचकाशे ।

राजनैतिकार्थिकक्षेत्रेषु इन्दिराया नीयाः क्रान्तिरुत्पादिता ।
अ...रकापाकस्थानादयः स्तब्धाः ।

# वंगभंगः

## मुजीबमहाभागस्य परिवारः मध्ये तत्पत्

बांगलादेशे स्त्रीणां बालकानाञ्च संरक्षणं कृत्वा भारतप्रधान
त्यया श्री इन्दिराया तद्देशस्वातन्त्र्यं रक्षितम् ।

व्य ज्योतिषः आजीवनं संरक्षिका अव ॥

शोकाकुलः
दिव्यज्योतिः
परिवारः

R. N. 6384/57 Registered No. 10

# जयन्तीमालदय

यदि कश्चित् मां पृच्छेत् यद् भारतस्य सर्वश्रेष्ठरिक्थं किमस्ति तु अहमिदं निःसंशयं कथयिष्यामि यत् संस्कृतभाषा ।

...श्रीजवाहरलाल नेहरु

संस्कृतस्य सचित्र – मासिकम्

भारतस्य प्रथमराष्ट्रपति श्रीराजेन्द्रप्रसादानां जन्मशती मासेऽस्मिन् समस्तभारते समारोहपूर्वकं मान्यते। एते महानुभावाः भारतीय-संस्कृतिप्राणभूताः आसन्। दिव्यज्योतिषोऽङ्कान् आचार्येभ्यः सादरं गृह्णानाः।

शिमला, दिसम्बर, १९८४

# विषयानुक्रमः


| सं० | विषयः | | लेखकः | | पृष्ठ |
|---|---|---|---|---|---|
| १. | राष्ट्रगीतम् | ... | डा० गंगादत्त शास्त्री प्राचार्य, सं० कालेज जाँगला, शिमला- | ... | १ |
| २. | गीतम् | ... | श्री ईश्वरदत्त शास्त्री एम. ए. रा. उ. वि. स्वाहन | ... | २ |
| ३. | द्यूत केन्द्रम् | ... | श्री निगमस्वरूप शास्त्री | ... | ३ |
| ४. | पावनं प्रेम | ... | श्री जीत सिंहः खोखर | ... | ४ |
| ५. | व्यंग्य गीते | ... | श्री लेखराम शर्मा | ... | ४ |
| ६. | हि. प्र. संस्कृतस्य... | ... | सम्पादकः | ... | ... ५ |
| ७. | समाचाराः | ... | ... | ... | १५ |
| ८. | सम्पादकीयम | ... | ... | ... | |



संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, दूरभाष : 3859

प्रधान सम्पादक :— प्रा० केशव शर्मा, शास्त्री, एम. ए., एम. फिल, ,, 8-200

दिव्यज्योतिः कार्यालयः भारती विहार, मशोबरा-९

मुद्रक :—

भारती मुद्रणालय भारती विहार, मशोबरा-१७१००७

शिमला (हि. प्र.) स्वामी :- श्रीमती रत्नकुमारी आचार्य

दिसम्बर १९८४—माघ २०४१ अङ्क ३ — मूल्यम् २० रु०

वर्षम्...२९

# राष्ट्र-गीतम्

डा० गङ्गादत्त शास्त्री वेदाचार्यः
एम. ए. (द्वय) पी एच. डी. साहित्य-
काव्यतीर्थः

रे नर भावय देशहितम् ।
जागृहि जागृहि कीदृशमेतत,
दुर्दिनमापतितम् ।
रे नर, भावय देशहितम् ।

चिन्तय रात्रिदिवं निजमनसि,
किं स्याद्देशकृते,
यदि न कृतं किञ्चिन्निजमातुः
व्यर्थं जन्म गतम् ।
रे नर, भावय देशहितम् ।

दिशि दिशि व्याप्ताः हिंसकवर्गाः,
लुण्ठनकार्यरताः,
दुर्वृत्तैरिह नित्यम्
निजव्यूहं रचितम् ।
रे नर भावय देशहितम् ।

मातृभूमिमिह खण्डितुकामाः,
बहवः कार्यरताः,
देश द्रोहिणो प्रबला जाताः
व्याप्तं दुश्चरितम् ।
रे नर, भावय देशहितम् ।

मलिनयन्ति निजभारतवर्षम्,
ध्रुवमेते मलिनाः,
निरपराधजनमारणनिरतै—
रेभिः किन्न कृतम् ।
रे नर, भावय देशहितम् ।

रक्षकास्तु सञ्जाता अधुना
ध्वंसकारका इति जानीहि
दूयमानमतिजनसामान्यम्
दैवं, दुर्ललितम् ।
रे नर, भावय देशहितम् ।

सकललोकवन्दितपदपद्मां
हिमकिरीटिनीं निर्मलतोयां,
चारुचन्द्रिकाचर्चितचरणां,
जन्मभूमिमिह भज रे सततम् ।
रे नर, भावय देशहितम् ।

# गीतम्

★★★★★

शृणुत २ भो वीराः
शृणुत २ भो शूराः

देश अवस्था विकटा अस्ति,
सुरक्षा शृंखला शिथिला अस्ति,
भय विरहिता यात्रा नावलोकिता क्वचित् ,
भविष्यं युवकानां तमसि लुप्तं दृश्यते क्वचित् ,
कस्मात् अन्धकारे सुप्ताः ॥

बलात्कारेण योषितां नतमुखाः संजाता वयम् ,
यौतुक वेदीमण्डपे हता वरानना स्वयम् ,
तस्करैस्तु हृयते भुवनात् बालिका,
प्रकाशसंकुले दिने जीवनं नश्यते किल,
ईदृशाः सन्ति-अद्यतनीयाः व्यवहाराः ॥

परिश्रमहीनाः छात्रा जाताः,
अनुकृति - मग्नाश्चतुरा दृष्टाः,
गुर्वाज्ञा जाता-अवज्ञापूर्णा,
धृष्टा दृष्टाः सफला भावाः,
लज्जामः कर्मभिरेभिः ॥

कर्मप्रिया न जाताः केचित् ,
धर्मप्रिया न जाताः केचित् ,
दम्भप्रिया हि जाताः केचित् ।
असत्य प्रिया हि जाताः केचित् ,
ईदृशे काले मौनी भूता भवन्त कथम् ?

सुरा सुन्दरी भावविभावाः,
सर्वे सर्वाः शोभा-पूर्णाः,
तनु-आभा शालीना जाता,
मदिरा • मुग्धा महान्तो दृष्टाः,
किं सुप्ता युवका यूयम् ?

पावनत्योहाराः कलुषी भूताः,
निरामिषा मनुजाः सामिषा जाताः,
सच्चरित्रा नार्यो ऽवमन्यन्ते क्वचित् ,
चरित्रहीना पूज्यन्ते समस्ते भू-मण्डले,
युवकाः क्व सुप्ता यूयम् ?

— ईश्वरदत्तः स्वाहन
बिलासपुर,, (हि०प्र०)

व्यंग्यात्मकलघुकथा

# द्यूत केन्द्रम् ।

निगम स्वरूप शास्त्री

रेडक्रासविभागेन एकस्मिन् उपनगरे मेलकम् आयोजितम् । तत्र सांस्कृतिककार्यक्रमस्य व्याजेन अर्धनग्नं नृत्यं प्रदर्श्य, अश्लील-गीतानि गायित्वा रूप्यकैः क्रीडनीयया द्यूतक्रीडया अप्रगल्भेभ्यः धनं विलुण्ठ्य, प्रवेशपत्राणि विक्रीय च विभागः प्रतिदिनं भृशं मुद्राार्जनं करोतिस्म । नगरस्य कतिपयैः सज्जनैः अस्य मेलकस्य विरुद्धं प्रदर्शनमप्यायोजितं प्रमाणरूपेण ।

उपनगरस्य अनेका किशोरा, विद्यालयीयमहाविद्यालयीयछात्राश्च धनाढ्याश्च, द्विवनीय-रात्रिकालीनदृश्ये च सुरां पीत्वा धूम्रपानं कुर्वाणा केचन ताम्बूल चर्वन्तः धनापव्ययं कुर्वन्तिस्म । परं सेठबटोरचन्दस्य सुपुत्रः विकीर्यकुमारः स्नातककक्षायाः प्रथमवर्षीयः छात्रोऽपि प्रतिदिन दिवादृश्यं स्वच्छन्दरूपेण पश्यतिस्म । अस्मात् क्रुद्धः बटोरचन्दः प्रतिदिनं स्वात्मजं शुकनासोपदेशमिव उद्बोधयतिस्म । परं असफले जाते सति एकस्मिन् दिने स लगुडं उत्थाय ताडयितु विकीर्यकुमारमनु धावितः । परं विकीर्यकुमारस्तु अहं गृहं त्यक्त्वा गच्छामि कदापि नागमिष्यामि" इति चेतावनीं दत्वा गृहात् पलायितः ।

परं बटोरचन्दस्तु मार्गस्य कण्टकं दूरेगतं विचिन्त्य रात्रिकालीनदृश्ये प्रवेशपत्रं क्रीत्वा प्रविश्य च एकस्मिन् वेत्रासने प्रसन्नमना उपविष्टः ; धूम्रवर्तिकां ज्वालयितुं च अग्रे उपविष्ट युवकं सम्बोध्य उवाच भद्र ! दीपशलाकां (माचिस) दीयताम् । परं स भद्रः तस्य पुत्र एव आसीत् । तदा किं कर्त्तव्यविमूढस्य सेठ बटोरचन्दस्य मुखमुद्रा ग्रह-ग्रसितचन्द्र-इव दर्शनीयासीत् ।

संस्कृत अध्यापक
सरकारी हाई स्कूल मल्लेहवाल
पटियाला (पंजाब)

लघुकथा—

# पावनं प्रेम

'मदन ! सर्वं नष्टम्, नासीत् सा विश्वासयोग्या, वञ्चयित्वा मां गता, मम तु 'पावनं प्रेम ! नहि, नहि, सखे ! मुञ्च तादृशं पावनं प्रेम । सा तव द्रव्यस्यैव लुब्धा न तु तव प्रणयिनी । यदि पावनं प्रेम इच्छसि तदा ईश्वरप्रीतिं कुरु । तस्य प्रेम एव पावनम् अन्यत् सर्वं मायामयम् । अस्मिन् महामोहमये जगति न कश्चित् कस्यचिद् भ्राता न च कश्चित् कस्यचिद् ... ...।' अलं सखे, अलम् ! त्वं मम सत्पथप्रदर्शकः । सम्प्रति तु मम अन्तरात्मा मनुते-- "ईश्वरस्य प्रेम एव पावनम् ।" सत्यमेवोक्तं केनापि महर्षिणा—"स एव सर्वज्ञोऽजन्मा, निर्णायकः कर्ता, हर्ता, धर्ता फलदाता च सर्वेषां प्राणीनाम् ।"

श्री जीतसिंह खोखरः
रा० सं० कालेज नाभा

| | | |
|---|---|---|
| मया सो वैद्यः | ठ | प्रयोजमोल्लेखं बिना |
| रूदन्नवलोकितो | यङ् | मया एको |
| यः कथयति स्म | | ग्रन्थो ग्रथितः, |
| यद्हसितेन | गय | प्रयोजनमनुद्दिश्य |
| रोगाः क्षीयन्ते | गी | मन्दस्तु |
| आयुश्च वर्धते | ते | प्रवर्तत एव । |

लेखराम शर्मा
राजकीय संस्कृत महाविद्यालयः,
सोलनम् (हि० प्र०)

उलूकः उलू हुल्लू उलू उलू उलू उलू उलू

उलूके तु वायसारातिपेचकौ । १ (उलूके पुंसि काकारा–मेदिनी)

ऊष्ट्रः ट ,, ,, ,, ,, ,, ,,

ऊष्ट्रे क्रमेलकमयमहाङ्ग । २

ऊर्णा उन्न ऊन्न उत्त उन्न ऊन ऊन ऊन

ऊर्णा मेषादिलोम्नि स्यात् ३

उलूखलन्, उखली ऊखल. उखल, उखल उखली, उखल उखल

उदूखलमुलूखलम् । ४

ऋतुः ऋतु रूत, शीतु रित रूत रीतु रातृ रीत्

द्वौ द्वौ माघादिमासौ स्यात् ऋतु स्तैरयन स्त्रिभिः ५

स. कां. कु. च. बि. म. शि. सि.

ऋषिः रिसी रिशी रिक्षी रिसी रिसी ऋषि ऋषि

(ऋषयः सत्य वचसः ।) ६

ओष्ठः लब्बड होठ ओट ओठ ओठ ओठ ,,

(ओष्ठाधरो रदनच्छदौ ।) ७

ओषधिः ओखत औकतीः दवा ओकत, ओखत ओखत ओखद

(ओषधि फलपाकान्ता ।) ८

कथ कथा कौथा कथा कचा कथा (कौथा, कथा) कथा

प्रबन्ध कल्पना कथा । ९

कपटः कपट कोपट कबट कपट कपट कपट कोपट
कपट कोपट

कपटोऽस्त्री व्याज दम्भोपधयश्छद्म कैतवे–१०

कम्बलः कम्मल दोहड़ू गरड़ू, कम्मल, कम्बल काम्वल
कम्वल दोड़ू पट्टू

समौ रल्लककम्बलौ ११

कलकः कलक ,, ,, ,, ,, ,, ,,

कलङ्काङ्कौ लाञ्छनं च चिन्हं लक्ष्म च लक्षणम् १२

खेला खेल ,, ,, ,, ,, ,, ,,

क्रीड़ा खेला च कूदनम् १३

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | ,, | ,, | १५ | कां | २ | व | ५ |
| २ | ,, | ,, | ७५ | ,, | २ | ,, | ९ |
| ३ | ,, | ,, | ५० | ,, | ३ | ,, | ३ |
| ४ | ,, | ,, | २५ | ,, | २ | ,, | ९ |
| ५ | ,, | ,, | १३ | ,, | १ | ,, | ४ |
| ६ | अमर कोशः | श्लोकः | ४३ | ,, | २ | ,, | ७ |
| ७ | ,, | ,, | ५० | ,, | ,, | ,, | ६ |
| ८ | ,, | ,, | [illegible]६ | ,, | २ | ,, | ४ |
| ९ | ,, | ,, | [illegible]६ | कां | १ | व. | ६ |
| १० | ,, | ,, | ३० | ,, | १ | ,, | ७ |
| ११ | ,, | ,, | ११६ | ,, | २ | ,, | ६ |
| १२ | ,, | ,, | १७ | ,, | १ | ,, | २ |
| १३ | ,, | ,, | ३३ | ,, | १ | ,, | ७ |

स. कां. कु. बं. बि. म. शि. सि.

गन्धकः मन्धक ,, ,, ,, ,, ,, ,,

गन्धाश्मनि तु गन्धकः १

गुडः ,, ,, ,, ,, ,, ,, ,,

गुरुः ,, ,, ,, ,, ,, ,, ,,

ग्रहः घरेह गरीह ग्रह गरेह ,, ग्रह घरेह

उपरागे ग्रहः २

घासः घाह घाह घाह घा घाह घा घा

शष्पं बालतृणं घासो यवसम् तृणमर्जुनम् ३

चन्द्रमा चन्द्रमा चन्द्रमा ,, ,, ,, ,, ,,

हिमांशुश्चन्द्रमाश्चन्द्रः ४

चमसः चमचा ,, ,, ,, ,, ,, ,, ,,

यूषं चमस चिक्कसौ-५

छत्रम् छत छन्न छप्पर ,, ,, ,, ,,

छन्नन्तु रहसि क्लीबे

छादिते वाक्यलिङ्गकम्-६

छत्रम् छती छतरी ,, ,, ,, ,, ,,

छत्रं त्वातपत्रम्...-७

छलम् छल ,, ,, ,, ,, ,, ,,

अथ स्खलितं छलम-८

0═══00═══0

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | अमरकोशः | श्लो. | १०२ | कां | २ | व. | १ |
| २ | ,, | ,, | ९ | ,, | १ | ,, | ४ |
| ३ | ,, | ,, | १६७ | ,, | २ | ,, | ४ |
| ४ | ,, | ,, | १३ | ,, | १ | ,, | ३ |
| ,, | ,, | ,, | ३५ | ,, | ३ | ,, | ५ |
| ६ | मेदिनी कोशः | | — | ,, | — | ,, | — |
| ७ | अमरकोशः | | ३२ | ,, | २ | ,, | ८ |
| ८ | ,, | | १०८ | ,, | २ | ,, | ८ |

| सं. | का. | कु. | च. | बि. | म. | शि. | सि. |
|---|---|---|---|---|---|---|---|
| जन्म | जन्म | जनम | जलम | ,, | ,, | जौलमम् | ,, |

जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव: १

| जय: | जय | ,, | जित्त | ,, | जीत | जय | ,, |
|---|---|---|---|---|---|---|---|

जयाथ कुटज: शक्रो-२

| झर:, स्रोत: | छौ | मोगरा | नाल | नालू | झरना | झाल | झाल |
|---|---|---|---|---|---|---|---|

(स्रोत:) वारि प्रवाहो निर्झरो झर:-३

| डमरु: | | ,, | ,, | ,, | ,, | ,, | ,, |
|---|---|---|---|---|---|---|---|

डिण्डि इति शब्दं मिनोति-इति भानुजदीक्षित:

| डिण्डिम: | ढौंडी | ढढोरा | डेंडो | ढढोरा | डौंडी | ,, | ,, |
|---|---|---|---|---|---|---|---|

वाद्यप्रभेदा डमरु मड्डुडिण्डिम झर्झर:-४

| ढक्का | ढोल: | ,, | ,, | ,, | ,, | ,, | ,, |
|---|---|---|---|---|---|---|---|

स्याद्यश: पटहो ढक्का-५

| तप; | तप | ,, | ,, | ,, | ,, | ,, | ,, |
|---|---|---|---|---|---|---|---|

तप: कृच्छ्रादिकर्मं च-६

| तारा | तारा | ,, | ,, | ,, | ,, | ,, | ,, |
|---|---|---|---|---|---|---|---|

नक्षत्रमृक्षभं तारा-७

| दक्षिण: | दक्खरा | ,, | ,, | ,, | ,, | ,, | ,, |
|---|---|---|---|---|---|---|---|

पूर्वदक्षिणपश्चिमा:-८

| द्वार: | द्वार—दुआर | ,, | ,, | ,, | ,, | ,, | ,, |
|---|---|---|---|---|---|---|---|

स्त्रीद्वार्द्वारं प्रतीहारा-९

---

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | अमरकोश: | श्लोक | कां. | ३० | वा | १ | ४ |
| २ | ,, | ,, | | ६६ | ,, | २ | ४ |
| ३ | ,, | ६६ | | २ | ,, | ,, | ४ |
| ४ | ,, | ८ | | ,, | १ | ,, | ७ |
| ५ | ,, | ६ | | ,, | १ | ,, | ७ |
| ६ | ,, | २३२ | | ,, | ३ | ,, | ३ |
| ७ | ,, | २१ | | ,, | १ | ,, | ३ |
| ८ | ,, | १ | | ,, | १ | ,, | ३ |
| ९ | ,, | १६ | | ,, | २ | ,, | २ |

| सं. | का. | कु. | च. | वि. | म. | शि. | सि. |
|---|---|---|---|---|---|---|---|
| देव: | देवता | देउ—द्यौ | द्यो | ,, | ,, | ,, | ,, |
| देवता | देवता | देवता | ,, | ,, | ,, | ,, | ,, |

अमरा निर्जरा देवा स्त्रिदशा विबुधाः सुराः ।
वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम् –१

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| देवर: | देव | द्योर | द्योर | द्योर | द्योर | देओर | देवर |

देव देवरी । २

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| धनम् | धन | ,, | ,, | ,, | ,, | ,, | ,, |

द्रव्यं वित्तं स्वापतेयं रिक्थ मृक्थ धनं वसु । ३

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| धर्म: | धर्म | ,, | ,, | ,, | ,, | ,, | ,, |

धर्मो ऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । ४

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| नाम | नां | नां | नाँ | नौं | नों | नाम्र | नांव |

नाम प्राकाश्य तम्भाव्य...... । ५

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| नाटनम् | नाटो | ,, | ,, | ,, | ,, | ,, | ,, |

ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने । ६

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| नाल: | नोल | ,, | ,, | ,, | ,, | ,, | ,, |

नीलो वर्णे मणौ शैले निधिवानर भेदयोः ।
नील्योषध्यां लाञ्छने च.......... । ७

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| | पीड़ा | पीड़ | ,, | ,, | ,, | ,, | ,, |

पीड़ा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम् । ८

---

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | अमरकोशः | श्लो. | ७ | का. | १ | व. | १ |
| २ | ,, | ,, | ३२ | ,, | २ | ,, | ६ |
| ३ | ,, | ,, | ,, | ,, | ,, | ,, | ,, |
| ४ | ,, | ,, | ३ | ,, | १ | ,, | ६ |
| ५ | ,, | ,, | २५१ | ,, | ३ | ,, | ३ |
| ६ | ,, | ,, | १० | ,, | १ | ,, | ७ |

७ हेमचन्द्रस्याभिधान चिन्तामणि कोशे ।

| | | | | | |
|---|---|---|---|---|---|
| ८ | अमरकोशः | ३ | १ | ,, | ९ |

| सं. | काँ. | कु. | चं. | बि. | मं. | शि. | सि. |
|---|---|---|---|---|---|---|---|
| पुत्रः | पुत | बेटा | पुत्तर | पुत्र | पुत्र | पूत | पूत |

आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । १

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| पुरोहितः | पुरोहत | ,, | ,, | ,, | ,, | परोइत | ,, |

पुरोधास्तु पुरोहितः । २

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| पूजा | ,, | ,, | ,, | ,, | ,, | ,, | ,, |

पूजा नमस्यापचितिः । ३

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| फलम् | ,, | ,, | ,, | ,, | ,, | ,, | ,, |

सस्ये हेतुकृते फलम् । ४

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| वालम् | बाल | ,, | ,, | ,, | ,, | ,, | ,, |

बालं ह्रीवेर बर्हिष्ठोदीच्यं केशाम्बु नाम च । ५

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| भक्तम् | भत्ता | भात | ,, | ,, | ,, | ,, | ,, |

... मण्डे भक्तसमुद्भवे । ६

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| भाग्यम् | भाग | ,, | ,, | ,, | ,, | ,, | ,, |

दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः । ७

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| मांसम् | मास-मांस | ,, | ,, | ,, | ,, | ,, | ,, |

पिशितं तरसं मांसं पललं क्रव्यमामिषम् । ८

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| माला | ,, | ,, | ,, | ,, | ,, | ,, | ,, |

माल्यं माला स्रजौ मूर्ध्नि । ९

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| यजमानः | जजमान | ,, | ,, | ,, | ,, | ,, | ,, |

यष्टा च यजमानश्च । १०

---

| | | | | |
|---|---|---|---|---|
| १ | अमरकोशः | २७ | २ | ६ |
| २ | ,, | ५ | २ | ८ |
| ३ | ,, | ३४ | २ | ७ |
| ४ | ,, | २०१ | ३ | ३ |
| ५ | ,, | १२२ | २ | ४ |
| ६ | ,, | ४९ | २ | [illegible] |
| ७ | ,, | २८ | १ | ४ |
| ८ | ,, | ६३ | २ | ६ |
| ९ | अमरकोशः | १३५ | २ | ६ |
| १० | ,, | ८ | २ | ७ |

| सं. | का. | क. | च. | वि. | म. | शि, | स. |
|---|---|---|---|---|---|---|---|
| यज्ञः | जग | ,, | ,, | ,, | ,, | ,, | ,, |

सर्ववेदाः स्वयैनेष्टो यागः सर्वस्वदक्षिणः । १

दीक्षान्तो ऽवभृथो यज्ञ : ... ... ... २

| सं. | का. | क. | च. | वि. | म. | शि, | स. |
|---|---|---|---|---|---|---|---|
| युद्धम् | जुद्ध | ,, | ,, | ,, | ,, | ,, | ,, |

युद्धमायोजनं जन्यम् । ३

| सं. | का. | क. | च. | वि. | म. | शि, | स. |
|---|---|---|---|---|---|---|---|
| राजा | ,, | ,, | ,, | ,, | ,, | ,, | ,, |

राजा प्रभौ च नृपतौ । ४

| सं. | का. | क. | च. | वि. | म. | शि, | स. |
|---|---|---|---|---|---|---|---|
| वर्षा | बरखा | ,, | ,, | ,, | ,, | ,, | ,, |

स्त्रि प्रावृट् स्त्रियां भूम्नि वर्षाः । ५

| सं. | का. | क. | च. | वि. | म. | शि, | स. |
|---|---|---|---|---|---|---|---|
| शखः | शंख | शाम्रोंख | संख | सख | संख | शख | शंख |

शंखः स्यात् कम्बुरस्त्रियौ । ६

| सं. | का. | क. | च. | वि. | म. | शि, | स. |
|---|---|---|---|---|---|---|---|
| शिरः | सिर | मूण्ड | सिर | सिर मुण्ड | ,, | शिर-मूण्ड | ,, |

(मुण्डः) उत्तमाङ्ग शिरः शीर्षं मूर्धा ना । ७

| सं. | का. | क. | च. | वि. | म. | शि, | स. |
|---|---|---|---|---|---|---|---|
| स्वर्गः | सुरग, | सौरग, | सरग | ,, | ,, | ,, | ,, |

स्वरव्ययं स्वर्ग नाकः । ८

| सं. | का. | क. | च. | वि. | म. | शि, | स. |
|---|---|---|---|---|---|---|---|
| हवनम् | हवन | हवन-हूम | ,, | ,, | ,, | ,, | ,, |

हवनी स्रुचि ना [त्वग्नौ होमे क्लो हवनं मतम् । ९

---

| | | | | |
|---|---|---|---|---|
| १ | अमरकोशः | ९ | ७ | ७ |
| २ | ,, | २७ | २ | ७ |
| ३ | ,, | १०३ | | ८ |
| ४ | मेदिनीकोशः । | | | |
| ५ | अमरकोशः | १९ | १ | ४ |
| ६ | ,, | २३ | १ | १ |
| ७ | ,, | ९५ | २ | ६ |
| ८ | ,, | ६ | १ | १ |
| ९ | वाङ्मयार्णवः | प. ४९८ | | |

उल्लिखितः अकाराद् हकार यावत् सोदाहरणं समुपस्थापितशब्दैः समयक्तया स्पष्टं भवति यद्हिमाचलीय लोकभाषायां संस्कृतस्य वैदिकलौकिकशब्दाः सर्वत्र व्याप्ताः सन्ति। अनेनान्यदपि परिज्ञायते यत् कथमत्रत्य-लोकभाषायामथवा कृषिसमाजे सस्कृतकोश—शब्दाः अद्यापि यथापूर्वं प्रचलिताः सन्ति । कैश्चिदुदाहरणैरिदं संसाध्यते। संस्कृते द्रोण:, खारी प्रस्थश्च शब्दा एते भारवोधकाः सन्ति । यथाह कोशकारः ।

अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चकः ।
कुडवः प्रस्थ इत्याद्या परिमाणार्थकाः पृथक् ॥१॥

एते शब्दाः हिमाचलीयकृषकेषु—अन्नपरिमाणार्थका एव सन्ति तत्र च द्रोण, जूण, खार, पाथा आदिरूपेण प्रयुज्यन्ते। येन रज्जनिर्मितसाधनेन पशवोऽत्र बध्यन्ते तदर्थमत्रत्यकृषकै दांव कथ्यते । अयमेव शब्दोऽमरकोशे "पशुरज्जस्तु दामनो" २ अनेन प्रकारेण संकेतितो वर्तते। येन काष्ठ-निर्मितेन वस्तुना दुग्धमन्थनं क्रियते तदत्रत्यभाषायां मधाणीतिउच्यते । अयमेव च कोशेऽनेन प्रकारेण संग्रहीतः "मन्थानो मन्थदण्डके" ३। मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके" ४ । अत्र मेढ् शब्दात् भेड़ शब्दो गृहीतः सन् मेषार्थे प्रयुज्यते । एडक शब्दोऽत्र मेषाणां समूहार्थे 'ऐड' इत्युच्चारणेन प्रचलितोऽस्ति । 'नवनीतं नवोद्धतम ५ नवनीतस्य वोधाय "नौणी" शब्द प्रयोगो विधीयते । अस्य व्याख्या भानुजदीक्षितोऽनेन प्रकारेण करोति" नवञ्च नीतञ्चेति। येन पशूनां कृते हरितपत्राणां लवनं क्रियते तदत्र पार्वत्य-भाषायां 'दाच' कथ्यते । अयमेव कोशेऽनेन प्रकारेणावाप्यते "दात्रम्" ५ । यस्य सहयोगेन हलस्य हलीषया सहयोजनं क्रियते तदर्थमत्र ओग यया रज्ज्वा च बलीवर्दानां स्कन्धदेशोपरि संस्थापितकाष्टसाधनम् उपयुज्यते तदर्थं ज्योच कथ्यते अस्यैव प्रयोगोऽत्र पश्यताम्, "आवन्धो योग, योक्त्रम " ७ अथो फलं निरीश कटक फालः कृषिकः लाङ्गलं हलम् ।८ हालः फालवहः सीता ।९

ईशा लाँगलदण्डः स्यात् । एषु श्लोकेषु फाला, हलम् , ईशा एते शब्दाश्चिन्त्याः। पार्वत्यभाषायां फाला, हलश (हलीशा) फाट एते शब्दाः

| | | | | | |
|---|---|---|---|---|---|
| १ | अमरकोशः | ८८-२-६ | ६ | अमरको: | १३.२.९ |
| २ | " | ७३.२.९ | ७ | " | " |
| ३ | " | ७४-२-९ | ८ | " | " |
| ४ | " | ७८-२-९ | ९ | विक्रमादित्यकोशः | |
| ५ | " | ४२-२-९ | | | |

## ५. प्रस्तावित संस्कृतभवनका निर्माण

२२ मई १९८४ को अखिल भा. सं. शिक्षा सम्मेलन के सुअवसर पर शिमला में ऐतिहासिक संस्कृत भवन निर्माण का प्रस्ताव पारित हुआ था। इसके लिये सरकार की ओर से २ लाख रुपये की घोषणा की गई थी संस्कृत जगत में इसका अपूर्व स्वागत हुआ था सम्मेलन कार्यालय मे बराबर पूछताछ हो रही है और उत्सुकता से संस्कृतानुरागी व विद्वान प्रतीक्षा कर रहे हैं कि कब और कहां संस्कृत भवन का शिलान्यास हो रहा है इस महत्वपूर्ण योजना को भी शीघ्र कार्यान्वित किया जाना चाहिए।

हमें आशा ही नहीं पूर्ण विश्वास भी है कि उल्लिखित ५ विषयों पर शीघ्र सन्तोष-जनक निर्णय लेकर सूचित करने की अनुकम्पा की जायेगी।

— हम हैं आपके कृतज्ञ

१. — दिवाकरदत्त शर्मा

संस्थापक व कार्यवाहक अध्यक्ष हि. प्र. संस्कृत साहित्य सम्मेलन हि. प्र सं. शि. प.

संरक्षक:—हि. प्र सं. शिक्षक परिषद तथा सं महाविद्यालय परिषद

२. केशव शर्मा, महामन्त्री, हि. प्र. स. साहित्य सम्मेलन, तथा परामर्शदाता हि. प्र. सं. शि. प.
३. दुर्गादत्त शास्त्री महामन्त्री सं. शि. प. शिमला
४. गोबिन्दराम शास्त्री अध्यक्ष, हि. प्र. सं. शि. प. सावड़ा
५. सीताराम शास्त्री सदस्य शिमला
६. श्री नागदत्त आचार्य अध्यक्ष, हि. प्र. सं. म. प. नाहन
७. मनमोहन आचार्य सदस्य शिमला
८. रामानन्द आचार्य ,, शिमला
९. प्रेमलाल शास्त्री महामन्त्री स. शि. प. शिमला

दिनांक ८.४.८५

संस्कृत शोध संस्थान
कार्यालय भारती बिहार
मशोबरा शिमला-७

---

प्रदेशस्य मुख्यमन्त्रिणा श्री वीरभद्रसिंहेन उल्लिखित पञ्चसूत्री प्रस्तावस्य पूर्तये होराद्वयपर्यन्तं विचारितं प्रदेशस्य संस्कृतज्ञैः साकं प्रदेशस्य मुख्य सचिवेन शिक्षासचिवेन चापि सह उभावपि-इमौ-अधिकारिणौ च पञ्चसूत्री प्रस्तावपूर्त्यर्थं समादिष्टौ। अहमत्र दृढं विश्वसिमि यत् पञ्चसूत्रप्रस्तावोऽयं यदि सम्यक्तया प्रदेशे प्रवृत्तस्तदा निखिलभारतस्य पथप्रदर्शनमनेन भविष्यति हिमाचलस्य च भारत भालत्वं सुतरां सेत्स्यति।

# संस्कृतं हि. प्र. संस्कृतलेखकाश्च

१९५५ ख्रीष्टाब्दस्य वार्ता वर्तते १९५०-५१ ख्रीष्टाब्दसमये पञ्जाबभाषा-विभाग: पञ्जाबशिक्षामण्डलञ्चात्र शिमला नगरेऽवर्त्तताम । भाषाविभागे प्रो० प्रेमप्रकाशसिंह: सहायकनिदेशक: आसीत् । श्री गुरुदत्त शर्मा अनुसन्धान अधिकारी एवमेवान्येऽपि केचन महानुभावा: भाषाविभागे आसन् । एते सर्वेऽपि संस्कृतस्नेहिन आसन । विशेषत: उभावपि ययोर्नाम सङ्केतो मया उपरि कृत: । शिक्षामण्डलस्य सर्वोच्चाधिकारी प्रो. हंसराजअग्रवाल: आसीत् । अयमपि संस्कृतसमर्थकोऽभूत । एतेषांसहयोगेन श्रीआचार्यचरणैरत्र हिमाचलसंस्कृतविश्वपरिषद: गठनमकारि । तद्वारा च संस्कृतप्रसारविकासकर्मणि काचित जागृतिरत्रोत्पादिता ।

१९५५ ख्रीष्टाब्दे शिमलायां अ० भा० आकाशवाणीकेन्द्रस्थापना जाता । अस्य केन्द्रस्य सर्वविधसञ्चालनभार: श्री एस. एस. एस. ठाकुरस्योपरि—आसीत यो हि हिमाचलत: एकमात्रविश्वप्रतिष्ठित: कलाकारस्तदानीं अ० भा० आकाशवाण्यां दिल्यामासीत् । सोऽपि संस्कृतस्य प्रबलसमर्थक: तेनाचार्याणां सन्निवेश:-प्रारम्भकालत एव अ० भा० आकाशवाणी केन्द्रे शिमलायां आकाशवाणीकलाकार-रूपेण विहित: (Part time sttaff Artist) प्रदेशस्यास्य केन्द्रत: रामायण-महाभारतवेदवेदाङ्गानां प्रभूतप्रचाराय श्री आचार्यचरणैस्तदानीं प्रयासा विहिता । द्वादशवर्षपर्यन्तं च सततं आकाशवाणी केन्द्र: सेवित: । इत: यदपि धनमायात तेनैव १९५६ ख्रीष्टाब्दे संस्कृतक्षेत्रे क्रान्तिकरकार्यमेभि कृतं दिव्यज्योतिष: संस्कृतमासिकस्य सम्पादनसंस्थापनप्रकाशनादिभि: । हिमाचलस्यैकभाषा भवेत् -- संस्कृताधारिता । इत्यपि एतेषामेव प्रयासस्तदाऽभूत् ।

आकाशवाणी संस्कृतपत्रञ्चोभावपि संस्कृतलेखकानां प्रोत्साहनाय यन्महत्वं धारयतस्तदभवन्त: स्वयमनुभवन्तु परन्तु तदानीं आकाशवाणीकेन्द्रमत्रातीव लघुतममभूत् दिव्यज्योतिष: माध्यमेन प्रदेशे संस्कृतलेखकेषु प्राणसञ्चार: कृत: । अनेके प्राचीन - नवीन - बालसंस्कृतलेखकाश्च प्रदेशे देशे च जनसम्मुखमायाता: ।

संस्कृतलेखकानां विषये दिव्यज्योतिषि काले २ विदुषां लेखा: प्रकाशमायातास्तेषां रचनाश्चापि अतोऽत्र न तत्पृष्ठपेषणं मया कार्यमस्ति । परन्तु प्रसारविकासमाश्रित्य येषां संस्कृत लेखकानां महत्वपूर्णं योगदानमस्ति तच्चर्चाप्यत्रावश्यका ।

अत्राहं स्वकीय-वृद्धप्रपितामहानाम् स्वपितामहस्य पितामहानां श्री पञ्चाननमहाभागानां नामोल्लेखं करोमि यैः संस्कृतपद्येषु पथ्यापथ्यनिर्णयो-ऽलेखि अस्य च हिन्दी टीका सहितं मया स्वयं प्रकाशनं कृतम्। तेषां संस्कृतनिष्ठा सीमातिक्रान्ता आसीत् सर्वेषु संस्कृतभाषायाः शास्त्रग्रन्थेषु तैः स्थाने २ संस्कृत-टिप्पण्यः स्वहस्तेन लिखिताः। सर्वेऽत्र काव्य, साहित्यं, ज्योतिष व्याकरणम्, वैद्यकं, कर्मकाण्ड तन्त्रमन्त्रादिकम्वा।

श्री आचार्यचरणानां पितामहाः पण्डित श्री नारायणदत्त शास्त्रिणोऽपि अत्र सर्वथा समुल्लेखार्हाः। तैरपि तदानीं पदातित्वेन काशीं गत्वा श्री शिवकुमार शास्त्रिणः पार्श्वे संस्कृतपाण्डित्यं प्राप्तम्। हिमाचल प्रदेशे वैद्यक-कर्मकाण्ड-पाण्डित्यमाध्यमेनैव संस्कृतसेवा विहिता इति मया पूर्वमपि उक्तम्।

मण्डीमण्डलवास्तव्याः श्री जगदेवोपाध्याया अपि विद्वन्मूर्धन्याः संस्कृत-लेखकाश्चाभूवन्। एतेषां ज्योतिषचमत्कारमद्यापि वर्णयन्ति लोकाः।

कांगड़ामण्डलान्तर्गताः श्री चन्द्रधर गुलेरिमहोदया अपि मूलरूपेण संस्कृत-लेखका आसन्। तेषां महत्वपूर्णरचना अस्माभिः दिव्यज्योतिषि प्रकाशं नीताः। परन्तु संस्कृतज्ञानामुपेक्षया ते हिन्दीजगतः लेखकाः जाताः। तत्र तेषां प्रभूतमानमपि-अभवत्।

इत्थं कियन्तेके स्फुलिंगाः संस्कृतलेखकत्वस्यातीते हिमाचलप्रदेश-इतिहासे सन्ति ये किल यत्र तत्र युगानां धूलिनिचयेषु प्रकाशन्ते।

अत्राधुनिकेषु संस्कृतलेखकेषु - अहं सर्वप्रथमं आचार्य श्री दिवाकराणामेव नामोल्लेखं कर्तुं विवशोऽस्मि यैः संस्कृतप्रसारविकासयोर्महद्भारः वोढस्तथापि लेखनं न परित्यक्तम् यदा कदापि स्वल्पकालो लब्धस्तदा तदा किमपि न किमपि लिखित-मेव संस्कृते। शोधः पद्येषु तेषां नूतनविषयः आधुनिकयुगे अनेन सहैव ज्योतिषशास्त्रे फलादेशकल्पतरुस्तेषां तादृशी मौलिकरचना या किल बहूनां शताब्दानां पश्चादद्यापि एकैव संस्कृते वर्तते। एतत् - हिमाचल प्रदेशाय संस्कृताय च गौरवावहम्।

कांगड़ास्थाः श्री दुर्गादत्त शास्त्रिणः प्रदेशे संस्कृतस्य द्वितीयाः लेखकाः ये किलान्यभाषासु लिखित्वा धनार्जनमपि कर्तुमर्हाः आसन् परन्तु संस्कृतनिष्ठत्वात्तैः संस्कृते ऽनेक काव्यनाटकग्रन्थाः लिखिताः प्रकाशिताश्च। अत्र केषाञ्चन-चिन्तनमेव-मपि भवितुमर्हति यदनेन तैः प्रभूतं धनमर्जितं स्यात्। परन्तु—अहं भुक्तभोगित्वात्-सनिश्चयमिदं ब्रवीमि यदियं तेषां संस्कृतनिष्ठा एव। प्रकाशनैः अर्जनं तु दूरे नूनमेव तैः स्वार्जितवित्तं संस्कृतप्रकाशनेषु समर्पितम्। 'गोपाय मा शेवधिस्तेऽहमस्मि' इति तु द्वितीया वार्ता।

सिरमौरमण्डलवास्तव्याः श्री परमानन्दशास्त्रिणः तथा मण्डीमण्डलवास्तव्याः श्रीभवानीदत्तशास्त्रिणोऽपि संस्कृते कठिनपरिस्थितिष्वपि स्वलेखनीं

[illegible]मानु: । तेऽपि स्मरणीयचरिता: । अद्य नवीनप्रतिभासु यद्यपि संस्कृत लेखने अद्य नास्ति न्यूनता प्रदेशे । तथापि केवलं अत्र मया प्रतिभाद्वयस्योल्लेख क्रियते एतस्य अयमाशय: कदापि न विद्वत्तल्लजंग्राह्य: यदन्ये लेखका निम्नस्तरीया: । अहं सर्वेषां सम्मानं समानरूपेण करोमि । तथापि यन्मयाऽनुभूतं तत्तिरोहितु [illegible]मलम

अत्र अस्यां प्रतिभा - द्वय्यां प्रथमोऽस्ति आचार्य केशवराम, इदानीं हि. प्र. शिक्षाविभागान्तर्गत महाविद्यालयप्रवक्ता । बाल्यादेव अस्य संस्कृत काव्ये महत्प्रवाह । शब्दलालित्य बिम्बप्रधान, छन्द: प्रयोग:, विषयवर्णनशैली अतीव प्रशसनीयमिद सर्वम् । य: कोऽपि अस्य काव्यपाठमेकदा प्रारभते चेत्तु समाप्तिपर्यन्त न त्यक्तु-मर्हति । इयमेव कवे: कव्यत्वशक्ति: । अस्य काव्यपाठकाले कण्ठावरोध: अश्रुप्रवाहश्च सहृदयपाठकस्य नूनमेव सहसा जायते । इदमेव कविजीवनसाफल्यम् । अनेन च संस्कृतलेखनमधुना पर्यन्तं त्यक्तमपि नहि । मातरं जगदम्बिकां प्रार्थये एनं सा शक्ति-प्रदानं कुर्याद्येनायं संस्कृतभाण्डार स्वरचनाभि: पूरयेत् ।

द्वितीया प्रतिभाऽपि हि. प्र. शिक्षाविभागान्तर्गता एव । श्री मनसारामअरुण: । अस्य संस्कृतं काव्यं संस्कृतालोचनशक्तिश्चोभावपि सर्वोच्चकोटिकमासीत् । अनेन प्रारम्भे खण्डकाव्यलेखनमारब्धम् अस्योपरि - अपि मदीया महती आशा आसीत । परन्तु मध्ये अनेन कदाचित् हिन्दी भाषायां अथवा पर्वतीयभाषायां लेखनमारब्धम् । अनेन च संस्कृतलेखने प्रभूत: बाधो जात: । केचनैनं प्रमत्त इति कथयन्ति । परमत्र नाहं सहमत: । अस्य मनसि संस्कृतनिष्ठा क्वचित्तादृशी वर्तते यथाऽयं सामयिक-संस्कृतविरोधिप्रवृत्तिभिस्ताडितस्तादृक् व्यवहारं करोति येन लोका: अस्य वास्त-विकसंस्कृतनिष्ठां ज्ञातुं न शक्नुवन्ति । संस्कृतप्रसारविकासाय अनेन कानिचन नवीनसाधनान्यपि-प्रयुक्तानि परन्तु ....। मातु: सकाशादस्य सहयोग: संस्कृत-प्रसारविकासकर्मणि प्राप्तो भवेदिति प्रार्थयते ।

एतेषामपरसंस्कृतलेखकानाञ्च संस्कृतप्रसारविकासकार्येषु य: सहयोग: स: सर्वथा प्रशंसार्ह: । अहं सम्यक् जानामि यदद्य संस्कृतलेखनं नास्ति सुगमकार्यं तथाप्यस्माभि: देवभाषाया: भण्डार: भरणीय एव येन आगामिसन्तत्तय: एवं न कथयेयु: यदस्मिन् काले संस्कृतलेखकै: सुरभारत्या: कोषा रिक्त एव स्थापित: इति ।

# दिव्यज्योतिषो माध्यमेन प्रदेशे संस्कृतसेवा

कस्या अपि भाषाया जीवनप्रमाणम् इदं यस्या भाषायां प्रकाशित-पत्राणि यानि दैनिकानि, सप्ताहिकानि, पाक्षिकाणि मासिक-द्वैमासिक-त्रैमासिक-षाण्मासिकवार्षिकादिभेदैर्बहुविधानि भवन्ति। तेषु दिव्यज्योतिः-मासिकं संस्कृतपत्रम्। अस्य प्रादुर्भावकालः १२ अक्तूबर, १९५६ खीष्टाब्दः। अचिरादेव एकोनत्रिंशत्-वर्षकालीना सेवापूर्तिर्भेति। दशकत्रयं यावत् पत्रेणानेन प्रदेशे देशे च संस्कृतस्य संस्कृतज्ञानाञ्च जीवन-पताकान्दोलन गौरवेण, सम्मानपूर्वकं क्रियतेऽनेनैव तुष्टाः स्म। दशकत्रययात्रायां यत्कष्टं, याः समस्याः, यदार्थिकसङ्कटमसम्मानञ्च विविध — क्षेत्रेभ्यश्चाकथनीयदमननीतिप्रभावः सोढः एतत्सर्वं विस्मृतमिवानुभवामोऽद्य यदा परितः पत्रेणानेन कृतसेवावृक्ष-कुसुमावलोकनं क्रियते।

अस्य सेवा विषयेऽतिस्वल्पमात्रायां देशस्य विदुषां नेतृवर्गस्य च विचाराः भवतां परिज्ञानाय संक्षेपेणोपस्थाप्यन्ते :—

## विद्वांसः—

स्व. श्री केदारनाथ शर्मा सारस्वतः, महामन्त्री,
अ. भा. सं. सा. सम्मेलनम् देहली-६, १९-६-५६

—.......— कस्यामपि भाषायां विविधपत्रिकासञ्चालनं हि तस्या भाषाया जीवितत्वे प्रमाणम्।

परं सहैव खेदास्पदं संशयास्पदञ्चैतत् – यद् येषां कृते प्रयत्नोऽयं सम्पाद्यते ते हि संस्कृतभाषोपजीव्याः पण्डिताः कथमप्युदरभरणभारभुग्नाः संस्कृतभाषा—समुत्थानविषये किमपि श्रोतुमपि नाभिलषन्ति, विनामूल्यं प्रेषितमपि साहित्यं वाङ्मयञ्च नावलोकयन्ति। शुल्कं दत्वा तस्यानयनं तु महद् विपद् स्थानं तेषां कृते। ये केचन परिगणनीयाः सपुत्साहवन्तः सन्ति त एव पत्राणि शुल्कं दत्वा पठन्ति अत एव संस्कृतपत्राणां जीवनं सङ्कटापन्नमेव सन्तिष्ठते इत्यस्माभिः त्रिंशद्वर्षेभ्यो निरन्तरमनुभूयते। तथापि तदनुरागिभिस्तत्रोत्साहः प्रयत्नश्च कर्तव्य एव।

तदंस्यस्तैव विषयेऽपि सकदे, [illegible] प्रकाशितो भवतामुत्साहः स्वयं साधनीय एवेति — — ।

## म. म. श्री गिरिधरशर्मा चतुर्वेदी. वाराणसी, १२-१६-५६

—... पत्रस्यास्य सरला भाषा बालानामपि सरलतया ऽधिगन्तव्या-इत्यहमनुमोदयामि ।

## म. म. श्री नारायण शास्त्री खिस्ते, बनारस, २२-११-५७

' —... दिव्यज्योतिरङ्को भवत्प्रहितो लब्धः । अपूर्वशैलीसम्पन्नोऽय-मिति चमत्कृतः प्रसन्नश्चास्मि ।"

## महाकवयित्री सुश्री कु. निर्मलदेवी श्यामा—बम्बई, १९५८

"दिव्यां नव्यां सुभव्यां तां रम्यां सेव्याञ्च सत्प्रियाम् ।
मान्यां गण्यां सुधन्यान्तु नवां पुण्यां हि पत्रिकाम् ॥
प्रसूनैः प्रीतिपूर्णैश्च पूजयामि पुनः पुनः ।
प्रार्थये प्रभु - पद्मेषु सुप्रसारो जने जने ॥

## म. म. श्री सदाशिव शास्त्री मुसलगाँवकर, ग्वालिअर (म. प्र.) १९५८

"...... दिव्यज्योतिषः सम्पादकोऽपि भूरि धन्यवादार्हः । येन महिमाशालिना विदुषा धनेन स्वार्थान् दूरतः क्षिप्त्वा संस्कृतस्य प्रचाराय सर्वस्वमेवार्पितम् । अत एव पत्रमिदमस्मिन सुविषमेऽपि काले नानाविद्यासु प्रतिबन्धकघटनासु—उपस्थितासु अपि समुद्घोषित समय एव लोकाराधनाय निर्यातम् ।

—

## डा० श्री मुरलीधर पाण्डेयः

प्राचार्य श्री रणवीरकेन्द्रीय संस्कृत विद्यापीठ जम्मूकश्मीर १९८१

"—— दिव्यज्योतिः पत्रिका शास्त्रीयं, साहित्यिकं, सामाजिकं च विषयजातं प्रकाशयन्ती वर्तमानकाले सुरभारत्याम् महती सपर्यामादधाति ।

———

# सम्पादकीयम्

## संस्कृतस्य प्रसारो विकासश्च

इयं लेखशृङ्खला कतिपयमासेभ्यो दिव्यज्योतिषि प्रचलितास्ति । इदानीञ्च अस्या अन्तिमः प्रसङ्गश्चलन्नस्ति । जूनमासे समाप्तव्या । अद्यतनोऽयं कालः कस्या अपि संस्थायाः, दलस्य, वर्गस्य, जातेः धर्मस्य संस्कृतेः, भाषायाः, कलायाः प्रदेशस्य, देशस्य च विकासकालः ।

या जातिः, यो हि समुदायः, वर्गः, कला, भाषा, प्रदेशो वा ह्यम् बंप्रकारेण पृष्ठवर्तित्वमावहति स्म तत्र स्वातन्त्र्यकालस्य कतिपयवर्षेषु महीयान् विकासोऽजनि । यदा किल सर्वक्षेत्रेषु तादृशी प्रगतिः जाता तर्हि किमु संस्कृतस्य दुर्गतिर्जाता ? यदि च दुर्गतिरेव जाता । तर्हि तत्र किं कारणमिति कदाचिदपि संस्कृतज्ञैः गम्भीररूपेण विचारितम् ? तद्दुर्गतिनिवारणाय वा केचन प्रयासाः कृताः ?

मद्विचारेण संस्कृतक्षेत्रेऽपि विभिन्नदृष्ट्या विकासः जातः । हि. प्र. संस्कृतक्षेत्रे कीदृशः प्रसारः विकासो वा संस्कृतस्याभूत् - एतस्य सप्रमाणविवरणं अस्यां लेखमालायां पाठकानां सम्मुखमस्थापयम् । यत्र च संस्कृतस्य पक्षः निर्बलः सोऽपि सुधियां विचाराय स्थाने स्थाने सङ्केतितः । इयं संस्कृतस्य प्रसारविकास-कथा संस्कृतजगतः समक्षमद्ययावन्नानीता आसीत् । यदि एवं नाकरिष्यत्तु भाविसंस्कृतसमाजपार्श्वे किमपि प्रमाणं नाभविष्यत् संस्कृतप्रसारविकासक्षेत्रेषु कृतस्य क्रियमाणस्य वा कार्यस्य ।

मदीयमिदं निवेदनमस्ति यदस्माभिः स्वन्यूनताऽनुभवोऽपि कार्यः । स्वसमाजस्योत्थानाय च प्रयासाः विधेयाः ।

## प्रार्थना

यैः किल १९८५ कृते शुल्कं नहि प्रहितम् । तैः वा. शु. प्रेषणीयम् । यदि कश्चित् पत्रिकां कस्मिन्नपि मासे नाधिगच्छति तेन कार्यालयः सूचनीयः येन पुनः पत्रिकाप्रेषणं क्रियेत । यतोहि बहुवारं डाकगृहेष्वेव पत्रिका लोपमधिगच्छन्ति ।

— केशव शर्मा

R. N. 6384/57 Registered No. 10

# विद्वद्वर श्री हरदेव त्रिवेदानां सम्मानम्

सं. २०४२ तमे वर्षे महाराणा मेवाड़ फाउन्डेशन उदयपुर-स्थेन संस्थानेन 'ज्योतिष्मती' "श्री विश्वविजय पञ्चाङ्ग" सम्पादकाः, हि. प्र. विश्वहिन्दुपरिषदोऽध्यक्षाः श्रीमन्तो हरदेव त्रिवेदिमहाभागाः हारीतऋषिपुरस्कारेण सम्मानिता इति सर्वेषां विपश्चितां परमप्रसादजनकम् ।

अस्मिन् पुरस्कारे ५००१ रु. धनराशिः, रजतप्रशस्तिका, कौशेयमुत्तरीयञ्च समर्प्यते ।

त्रिवेदिमहाभागाः ज्योतिष्मतिनिकेतनसोलन हि. प्रदेशात् एकचत्वारिंशद् वर्षेभ्यः केतकीचित्रापक्षीयं सार्वदेशिकं धर्मशास्त्र-सम्मत सुविशुद्ध "श्री विश्व विजय पञ्चाङ्गम्" सम्पादयन्तो ज्योतिषशास्त्रस्य प्रसारे विकासे च तत्पराः सन्ति ।

अथ च ज्योतिषवाङ्मयप्रसाराय पूर्वं स्वाध्यायत्रैमासिकं सम्पादितम् । अधुना अष्टाविंशतिवर्षेभ्यः त्रैमासिकीं ज्योतिष्मती-विपत्रिकां सम्पादयन्ति । धनजनसहायविहीनाः ७६ वर्षवयस्का अपि श्रीत्रिवेदमहाभागा रुग्णावस्थामुपगता अपि अस्मिन् लोक-हितकर्मणि नितरां प्रवृत्ताः ।

दिव्यज्योति परिवारः श्रीमतां चिरायुष्यमारोग्यं च कामयते ।

संस्कृतस्य सचित्र - मासिकम्



# शिमला, जून, १९८५

हिमाचललोक
प्रकुर्वाणः श्री चान्द
शशास्त्री ।

# दिव्यज्योतिः,

हिमाचलप्रदेश - पंजाब- हरियाणा-जम्मूकश्मीर मध्यप्रदेश - राजस्थान—महाराष्ट्र
उत्तरप्रदेशशासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।

पत्रस्य उद्देश्यानि तथा नियमाः

सरल-सरस-सुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां अन्वेषणं समाजस्य हितसम्पादनम्, एवं लौकिक— अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्ग्लमानेन) प्रकाशितं भवति ।
पत्रस्य वार्षिकं मूल्यं २० रु० अर्धवार्षिकं १५ रु० एकस्याङ्कस्य च रु० १-७५ भवति ।
वर्षारम्भः आश्विन— मासतः भवति । ग्राहकः कस्मादपि मासाद् भवितुं अर्हति ।

ग्राहकैः "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोबरा, शिमला-१७१००७ हि. प्र."
इति संकेतेन धनादेशेन वा शु. प्रेषणीयम् ।

निदर्शन-अङ्कस्य (नमूना) प्राप्तये २/- रु० मूल्यं प्रेषणीयम् ।
"दिव्यज्योतिः" प्रतिमासं सम्यक् - निरीक्ष्य प्रेष्यते । यदि कश्चित् अपि ग्राहकः पञ्चविंश दिनं यावत् पत्रं न प्राप्नुयात् तर्हि स पत्रालयात् तत् कारणं जानीयात् । उत्तरपत्रम् (जवाबी कार्ड) प्रेषणीयम् यदि कार्यालयात् किमपि ज्ञातव्यं भवेत् ।

सुयोग्याः लेखकाः स्वपारकृताः स्तम्भसम्बन्धिताः रचनाः एव प्रेषयेयुः । प्रेषितरचनानां प्रतिलिपिः लेखकैः स्वपार्श्वे संरक्षणीया एव । यतोहि कार्यालयस्तदुत्तरदायित्वं न वहति ।

अस्वीकृताः रचनाः प्राप्ते डाकव्यये एव प्रतिनिवर्तयिष्यन्ते ।

कस्याः अपि रचनायाः प्रकाशनाप्रकाशनयोः तथा संक्षेपसम्वर्धनादि-अधिकारः सम्पादकाधीनः । प्रकाशनार्थं प्रेषिताः रचनाः कर्गदस्य एकस्मिन् पार्श्वे सुस्पष्टाक्षरैर्विलिख्य प्रेष्याः ।

— — —

## परिचयः

संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्तशर्माणः, दूरभाष · 3859
प्रधानसम्पादकः -- प्रा० केशव शर्मा म. ए., एम. फिल, साहित्यरत्नम्, ,, 8-200
दिव्यज्योतिः कार्यालय भारती विहारः, मशोबरा, शिमला-७ (हि.प्र.)

मुद्रकः प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि.प्र.)
स्वामी ... श्रीमती आचार्य रत्नकुमारी शर्मा

## हिमाचल प्रदेशे संस्कृतस्य प्रसारो विकासश्च

( गताङ्कादग्रे )

Grams : Institute
Phone : 2235

Indian Institute of Advanced Study
Rashtrapati Nivas, Simla-5 (India)

मुद्रा

August 20, 1971

Director

Shri Keshave Sharma
Chief Editor Divyajyoti
Om Niketan. Circular Road
Lakkar Bazar Simla - 1

Dear Shri Sharma-ji :

Thank you very much indeed for your kind letter and for the copy of the Divyajyoti that you are good enough to send me I have gone through the contents and I am very happy to say that I found it to be an interesting and stimulating venture Writing about modern times and affairs and personalities in Sanskrit is, I think, an very effective way of keeping the classical language alive and bringing it near to the common man. There is also a unity of purpose in this issue in so far as many of the oriental scholars and men of genius have been introduced to the students of Sanskrit. Besides stimulating an interesting Sanskrit, the issue is a useful list of scholars in the field of classical learning. I congratulate you on this publication.

With kind regards.

Yours sincerely
(V. K Gokak)

**प्रशामका:**

श्री सी. पी. एन. सिंह, राज्यपाल, पञ्जाब, चण्डीगढ़ १९-९-५७

"...... संस्कृत भाषा धीरे धीरे पुनर्जीवन प्राप्त कर रही है—इसके कई प्रमाण मिलते हैं? इसके उत्थान के लिए पत्रिकाओं की आवश्यकता सदा ही रही है। इस दिशा में दिव्यज्योतिः का प्रयास प्रशंसनीय है।

श्री न. वि. गाडगील, राज्यपाल, पञ्जाब, २६-१०-५८

......दिव्यज्योति: के कई अङ्क मैंने पढ़े और जो काम दिव्यज्योति: संस्कृत के बारे में कर रहा है वह एक उत्कृष्ट कार्य मैं मानता हूँ।

## नेतार:

स्व. श्री प्रताप सिंह कैरों मुख्यमन्त्री, पञ्जाब, १९५८

"......बाधाओं और कठिनाइयों को पार करती हुई। दिव्यज्योति: संस्कृत सेवा में संलग्न है।

संस्कृत सब भारतीय भाषाओं की जननी है। अत: इसके प्रचार प्रसार और अभिवर्धन से देश में समन्वयात्मक भाव और भावात्मक एकता को बल मिलेगा।'

श्री गुलाम मुहम्मद बख्शी, मुख्यमन्त्री जम्मू तथा कश्मीर १९५८

"......The Divyajyoti has been publishing valuable Literature Concerning Sanskrit and bringing to light hither to little known master pieces of this great language. This is an important work and deserves encouragement by all Lovers of learning......"

श्री नरोत्तमलाल जोशी, राजस्थान विधान सभाध्यक्ष: जयपुरम्

"......दिव्यज्योति:" मासिक पत्रिकां प्राप्य सुतरामुत्फुल्लितं सञ्जातं मे चेत:। अमरवाणी प्रचारयितुं कामानां श्रीमतामेष प्रयास: स्तुत्य: संस्कृत-प्रेमिणामुत्साहवर्धकश्च सर्वथा सर्वोपायेन समर्थनयोग्य:।

# अन्यभाषापत्राणि संस्कृतञ्च

कस्या अपि भाषायाः प्रसारविकासप्राणभूतानि किल पत्राणि-एव भवन्ति । परन्तु संस्कृतस्य केवलं नियमितमासिकमेकमेव दिव्यज्योतिर्हि अस्मात् क्षेत्रात् निस्सरति । अनेन नूतनसाहित्यनिर्माणे महदेव साहाय्यं कृतमिति सर्वे एव सम्यक् जानन्ति । तथापि सहयोगिपत्रकारैः-- विशेषतः हिन्दी-आंग्लभाषापत्रैरत्र हिमाचलप्रदेशे संस्कृतप्रसारविकासकार्येषु संस्कृतसम्बन्धि समाचारान् दत्वा यः सहयोगोऽकारि तत् सन्निवेशोऽप्यत्रावश्यकः । स्वल्पमात्रायामेवोदाहरणमात्रमत्र दीयते ।

## PERIODICALS

DIVYA JYOTHI: Published by Ananda Lodge. Jakhu. Simla. It is in the fitness of things that, at a time when there is a renaissance of Sanskrit. this monthly magazine in Sanskrit should celebrate its first birthday with a special number. It carries articles of perennial interest written by savants and eminent writers of onr country. "The Influence of Indian Thought on western Literature" by Gajanana Sastry and "The Influence of Heavenly Bodies (Planets) on Human Destinies" by Ganess Rama are thought-provoking and deserve special study. Articles dealing with Sanskrit poetreis and the influence of Charyavada and Rahasyavada on Hindi literaturs by V. Srinivasachari and Acharya Mohana Deva respectively are noteworthy. The Hindi supplement to the number contains scholarly contributions of varied interest.

P. T. A.

## THE TRIBUNE FRIDAY SEPTEMBER 27, 1957
## PROPAGATION OF SANSKRIT

Governor's Appeal to Scholars.

From our own correspondent

Simla Sept. 25 Presiding over the finals of the Sanskrit Shlokas Tournament, organised by all India Sanskrit Vishva Parishad, Simla to day, the Punjab Governor, Mr. C. P. N. Singh, appealed to Sanskrit scholars to do their best for imparting teaching and propagatfon of Sanskrit so that it could achieve its proper place.

The Governor expressed his thanks to those who were responsible for preserving and propagating Sanskrit which was the source of Indian Civilization and culture.

The Governor agreed that it was essential to provide facilities their legitimate demands, but they should not work with the sole idea of getting substantial compensation. They should work with zeal for the ideal to promote Sanskrit.

Sanskrit he said, was at its zenith in ancient times and "We should try to bring to the same level".

The Governor said that the Punjab Government had given a grant of Rs. 50,000 for Sanskrit vidyalayas and he had no doubt that this amount would go on increasing from year to year. but donations, he said did not matter as much as goodwill and good wishes for cause.

Mr H. R. Aggarwal, Registrar, Departmental examinations, praised the lead given by the Governor in starting the Sanskrit University at Kurukshetra and hoped student from countries like China, Japan, America and Britain would be attracted to this Uuiversity.

Shri Jodhamal Kuthiala then awarded the running trophy to the Arya Kanya Pathshala Simla. Cups to the runners-up and individual prizes and certificates were also awarded.

## संस्कृत साहित्य प्रतियोगिता का आयोजन

( संवाददाता द्वारा )

शिमला संस्कृत साहित्यके प्रसार प्रचार एवं इसके नाटकीय, उपन्यासीय तथा कहानी क्षेत्र में नव-जागरण के हेतु अ. भा. संस्कृत कहानी प्रतियोगिता का आयोजन किया गया है। यह आयोजन संस्कृत मासिक पत्रिका दिव्यज्योति: कर रही है। प्रतियोगियों को तीन पुरस्कार दिये जायेंगे प्रथम पुरस्कार १५० रु. द्वितीय पुरस्कार १०० रु., तथा तृतीय पुरस्कार ५० रु. का होगा। कहानी एक हजार शब्दों से अधिक नहीं होनी चाहिये। पुरस्कृत उत्तम कहानियाँ दिव्यज्योति में प्रकाशित होंगी। रचनायें २९ फरवरी तक भेजी जा सकती हैं।

## हिमाचल में संस्कृत लागू करने की मांग

शिमला, हिमाचल प्रदेशीय संस्कृत साहित्य सम्मेलन के विशेष अधिवेशन में मन्त्री प्रो० केशव शर्मा ने कहा कि प्रदेश के सभी जिलों के लोगों की यह उत्कट इच्छा है कि प्रदेश के शिक्षाक्रम में उर्दू के स्थान में

तुरन्त संस्कृत को लागू किया जाये और इसके अनिवार्य अध्यापन की व्यवस्था हो। श्री शर्मा ने यह भी कहा कि प्रदेश के प्रत्येक जिले में सम्मेलन के शाखा कार्यालय आगामी कुछ ही मासों में पूर्णतया कार्य करने लग जायेंगे। श्री शर्मा ने आशा व्यक्त की कि सरकार भी शीघ्र ही इसके सम्बन्ध में उचित कार्यवाही द्वारा प्रदेश के जनमत का आदर करेगी और अपनी बुद्धिमता का परिचय देगी।

(वीर प्रताप)

## संस्कृत को अनिवार्य भाषा बनाने की माँग

शिमला ९ नवम्बर ६७-"भारत की स्वतन्त्रता-प्राप्ति के तुरन्त बाद यदि संस्कृत को राष्ट्र-भाषा का स्थान दे दिया जाता तो यह निश्चित था कि आज हमारे देश में नैतिक-पतन की स्थिति पैदा न होती।"

यह शब्द संसद्सदस्य राजा वीरभद्र सिंह ने आज यहाँ हिमाचल प्रदेशीय संस्कृत साहित्य सम्मेलन के वार्षिक समारोह में अध्यक्ष-पद से भाषण देते हुए कहे।

उन्होंने दावा किया कि यदि आज भी संस्कृत को आरम्भ से लेकर अन्त तक शिक्षा में अनिवार्य विषय बना दिया जाए तो हमारी आने वाली पीढ़ियाँ जहाँ प्रबुद्ध होंगी, वहाँ उनका मानसिक-स्तर भी अधिक ऊंचा होगा।

राजा साहब ने व्यंग्य करते हुए कहा कि संस्कृत के प्रति हमारी उदासीनता का इससे बड़ा और क्या उदाहरण हो सकता है कि आज के इस महत्वपूर्ण समारोह में किसी भी अंग्रेजी समाचार पत्र का संवाद प्रतिनिधि शामिल नहीं हुआ।

आज के सम्मेलन का उद्घाटन आकाशवाणी को टेलीविजन-सेवा के निदेशक ठाकुर शिवशरण सिंह ने किया। उनके अतिरिक्त सम्मेलन के प्रधान एवं प्रतिष्ठापक आचार्य दिवाकरदत्त शर्मा ने भी संस्कृत-साहित्य की पूर्णता पर प्रकाश डाला।

(वीर प्रताप)

# शिमला में प्रान्तीय संस्कृत साहित्य सम्मेलन का महाधिवेशन

(संवाददाता द्वारा)

२९-१०-६७ को शिमला में हुए :—

हिमाचल प्रदेश संस्कृत साहित्य सम्मेलन का वार्षिक निर्वाचन हिमाचल प्रदेश के शिक्षा मन्त्री श्री रामलाल की अध्यक्षता में सर्वसम्मति से सम्पन्न हुआ। इस अवसर पर अपने अध्यक्षीय भाषण में शिक्षामन्त्री महोदय ने कहा कि सम्मेलन प्रदेश में जो कार्य कर रहा है वह प्रशंसनीय है। सरकार पहले ही इसके प्रति जागरूक है। भविष्य में भी यथा सम्भव सहयोग सम्मेलन की योजनाओं के लिए मिलता रहेगा। यह बात भुलाई नहीं जा सकती कि संस्कृत भारतीय संस्कृति की मूलाधार है। राजा श्री वीरभद्र सिंह संसद-सदस्य ने कहा कि भारत के लोगों में भारतीयता अंग्रेजी के द्वारा नहीं लाई जा सकती यह काम संस्कृत के अध्ययन से ही हो सकता है। प्रदेश के शिक्षा-शास्त्री आचार्य श्री दिवाकर दत्त शर्मा ने कहा इस शरीर को गत २५ वर्षों से प्रदेश में संस्कृत की सेवा करने का सौभाग्य प्राप्त हुआ है। अब केवल मेरी यही हार्दिक अभिलाषा है कि प्रदेश के प्रत्येक नरनारी, बालवृद्ध संस्कृताध्ययन से सुसंस्कृत हो और भारत का अतीत गौरव उसे फिर प्राप्त हो जावे इस अधिवेशन में काफी संख्या में संस्कृतज्ञ और संस्कृतानुरागी लोग उपस्थित हुए तथा निम्न प्रस्ताव सर्वसम्मति से पारित हुए:—

(१) शिमला में १९६८ में प्रदेशीय संस्कृत साहित्य सम्मेलन किया जावे।

(२) संस्कृत के विशेष अध्ययन के लिए शिमला में संस्कृत विद्यापीठ की स्थापना की जावे।

(३) प्रदेश के शिक्षणालयों में संस्कृत को अनिवार्य विषय घोषित किया जावे।

(४) पदाधिकारियों का निर्वाचन निम्न प्रकार से हुआ :—

संरक्षक:—(१) श्री १०८ स्वामी सुग्रीवानन्द जी महाराज (२) श्री १०८ स्वामी लाल दास जी महाराज, (३) श्री १०८ राजर्षि कुनासिंह जी महाराज।

सभापति : -राजा श्री वीरभद्र सिंह, संसद-सदस्य।

कार्यवाहक सभापति - आचार्य श्री दिवाकरदत्त शर्मा।

उपसभापति: (१) राजा श्री योगेन्द्र चन्द्र जी, (२) राणा श्री जगदीश शम्शेर, (३) कर्नल श्री बलदेव सिंह पठानिया, (४) श्री पं० हरदेव शर्मा त्रिवेदी, (५) श्री ठाकुर सेन नेगी, (६) श्री एस. एस. एस. ठाकुर, (७) आचार्य श्री रामसिंहासन त्रिपाठी।

महामन्त्री :—प्रो. श्री केशव शर्मा संयुक्त मन्त्री :—आचार्य श्री सच्चिदानन्द काण्डपाल सहायक मन्त्री :—श्री सुदर्शन चक्र, संगठन मन्त्री:- श्री केशव राम दर्शनाचार्य, प्रचारमन्त्री श्री सतीश चन्द्र महाजन। सूचना मन्त्री श्री स्वरूप नारायण शास्त्री, कोषाध्यक्ष श्री मयोध्या प्रसाद जैन।

इसके अतिरिक्त कार्यकारिणी के सदस्य भी निर्वाचित हुए।

— सीमान्त प्रहरी।

●

## PLACA FOR SANSKRIT IN THREE-LANGUAGE FO MULA SOUGHT

### From Our Special Correspondent

SIMLA, July 14- The Excutive of the H. P. Sanskrit Samme. lan demanded here yesterday that Sanskrit should be bracketed with Urdu in the three language formula currently in force at school-level in the Pradesh.

Mr. Vir Bhadra Singh. M. P. presided.

While the teaching of Hindi and English begins in the first and the fourth primary classes respectively, cempulsory teaching of Urdu starts at the secondary stage in sixth class.

The Sammelan was of the opinion that with regard to the third language, the choice should be left to the student or his parents.

It urged for its representation in the School Board recently set up by the Himachal Pradesh Government. — The Tribune.

O

## हिमाचल में दूसरी भाषा के रूप में संस्कृत पढ़ाई जाए

### कुल्लू के वरिष्ठ नेताओं की हिमाचल सरकार से मांग

(विशेष सम्वाददाता द्वारा)

कुल्लू के प्रमुख नागरिक जिनमें कुल्लू नगरपालिका के नये प्रधान श्री जगदीश चन्द, उपप्रधान श्री रघुनाथदास गुप्ता, श्री विद्यासागर सदस्य नगर

पालिका, श्री श्यामलाल कौशल संयोजक हिन्दी साहित्य सगम, श्री विजय कुमार कम्बोज मन्त्री हिमाचल पत्रकार संघ कुल्लू शामिल हैं, ने एक संयुक्त वक्तव्य जारी किया है, जिसमें कहा गया है कि हिमाचल सरकार ने प्रांत में तीसरी भाषा के रूप में उर्दू पढ़ाने का जो निर्णय किया है, वह खेदजनक है इसे वापिस लिया जाये। दूसरी भाषा के रूप में संस्कृत पढ़ाई जाये। वक्तव्य में कहा गया है कि हिमाचल प्रदेश के लोग उर्दू के इतने निकट नहीं हैं, जितने कि संस्कृत के। इस के अतिरिक्त हिमाचल प्रदेश देवी देवताओं एवं ऋषि मुनियों की पवित्र धरती है, वहां पर संस्कृत ही पढ़ाई जानी चाहिए हमारे सभी ग्रन्थ भी संस्कृत में ही हैं और उन्हें समझने के लिये संस्कृत का ज्ञान होना ही जरूरी है, उर्दू का नहीं और यह तभी हो सकता है, जबकि स्कूलों में तीसरी भाषा के रूप में संस्कृत की पढ़ाई आवश्यक विषय के रूप में कराई जाये। वक्तव्य में यह भी कहा गया है कि स्कूल के विद्यार्थियों का चरित्र ऊंचा करने के लिए धार्मिक शिक्षा भी स्कूलों में दी जाये। अन्त में हिमाचल सरकार से सरकारी काम-काज भी हिन्दी में करने का अनुरोध भी किया गया है।

— वीर प्रताप

## Lt. Governor Urges Scholars To Promote Study of Sanskrit

From Our Special Correspondent

SIMLA, Nov. 10—Lt. Governor K. Bahadur Singh today called upon Sanskrit scholars to create popular interest in the study of Sanskrit which he said, was the trasure house of the country's ancient knowledge and literature.

Presiding over the concluding session of the two-day anual conference of the Himachal Pradesh Sanskrit Sammelan he said that all other Arvan languages were offshoots of Sanskrit.

Promotion of Sanskrit would help the process of national integration besides strengthening the spirit of patriotism among our people, he said.

Mr Virbhadra Singh, M. P. addressing delegates repudiated the view held in certain circles that Sanskrit was a dead language. Stressing the need for producing creative modern literature in simple Sanskrit he pointed out that the classical language was the storehouse of terminology for regional languages.

The 85-year-old Sanskrit scholar Mr. Tara Dutta, was given in absentia a cash award of Rs. 501 and a shawal. — The Tribune

A spokesman of the Sammelan announced that such an award to a distinguished Sanskrit scholar of Himachal would hereafter be a regular feature of the annual celebrations. Besides giving cash awards of Rs. 21 each to Mr Kechav Ram (Solan) Mr. Guru Prashad (Patiala) and Mr. Nand Lal Sharma (Mandi) the Sammelan also conferred certificates of boys and girls who secured positions of distinction in Sanskrir in various examinations conducted by Panjab University this year. The Tribune.

---

# शिमला में संस्कृत विद्वानों की संगोष्ठी

## हि. प्र. संस्कृत सा. सम्मेलन के तत्वावधान में

१०-६-६९ को प्रात: ११ बजे से २ बजे तक सम्मेलन का अधिवेशन श्री नेहरू संस्कृत कालेज में सम्पन्न हुआ जिसकी अध्यक्षता आचार्य श्री दिवाकरदत्त शर्मा ने की। सम्मेलन में निम्नलिखित प्रस्ताव पारित हुए :—

१. हि. प्र. सरकार ने यहां के संस्कृताध्यापकों को अन्य अध्यापक प्राध्यापकों के समान वेतनस्तर प्रदान न कर घोर अन्याय किया है।

२. प्रदेश में संस्कृत, या उर्दू इस प्रकार द्वितीय भाषा के रूप में संस्कृत को भी सम्मिलित किया जाय। संस्कृत का अध्यापन से ८वीं कक्षा तक अनिवार्य हो।

३. शिक्षा मन्त्री एवं सरकार का शिक्षा निर्देशालय संस्कृताध्यापकों के साथ हुए अन्याय पर पुनर्विचार करें एवं शास्त्री ओ. टी. को बी. ए, बी. टी. तथा आचार्यों को पोस्टग्रेज्युएट का स्केल प्रदान करें।

---

# संस्कृत के विद्वानों से

गत दिनों वीर प्रताप में आचार्य दिवाकर दत्त जी ने संस्कृत भाषा का महत्व, उसकी पंजाब में प्राचीन परम्परा तथा हरियाणा, हिमाचल में आजकी स्थिति पर प्रकाश डालते हुए संस्कृत के विद्वानों को अपने कर्तव्य-पालन के साथ स्व अधिकारों को सुरक्षा के लिए भी सचेष्ठ किया है।

मेरा निवेदन है कि भारतीय संस्कृति के प्रेमी संस्कृत भाषा की उन्नति के लिए अपने-अपने प्रान्त के संस्कृत साहित्य सम्मेलन के शीघ्र ही सदस्य बनें तथा अपनी समस्याएं संस्कृत के विकास के साधन और इस भाषा की महत्वपूर्ण शिक्षायें सरकार और जनता के सामने रखें तथा भारतीय संस्कृति, एकता, धर्म और साहित्य की रक्षिका को समृद्धि के लिए हर प्रकार, से सावधान हों। — प्रो० भद्रसेन, बहादुरपुर होशियारपुर

(वीर प्रताप)

सम्पादकीय वीर प्रताप दैनिक :—

## हिमाचल में संस्कृत

३१ अगस्त १९६९

मैं हिमाचल के मुख्य मन्त्री डा. यशवन्त सिंह परमार को उनकी भावनाओं और विचारों के लिए बधाई देना चाहता हूं, जिनको अभिव्यक्ति उन्होंने विगत दिनों शिमला में आयोजित संस्कृत दिवस पर की। उन्होंने कहा कि हमारे लिए यह लज्जा का विषय है कि संस्कृत को आज भी अंग्रेजी के समान नहीं समझा जाता। इस बात का पूरा प्रयास होना चाहिए कि संस्कृत एक जीवित भाषा है ताकि इसके माध्यम से हम अपने देश की संस्कृति को एक नया मोड़ दे सकें।

डा. परमार के विचारों से किसी को मतभेद नहीं हो सकता। परन्तु प्रश्न यह है कि उनकी सरकार इसके लिए क्या कर रही है। उत्तर भारत में हिमाचल एक ऐसा राज्य है, जहां अब भी भारत की प्राचीन संस्कृति किसी न किसी रूप में जीवित दृष्टिगत होती है। परन्तु यह क्रम अधिक देर तक नहीं चल सकता जैसे जैसे संस्कृत का प्रभाव समाप्त होता जाएगा, वैसे वैसे हमारी संस्कृति भी समाप्त होती जाएगी। अत: यदि इसे जीवित रखना है तो संस्कृत को भी एक जीती जागती भाषा बनाना पड़ेगा। और हिमाचल सरकार इसके लिए बहुत कुछ कर सकती है। वह न केवल अपने स्कूलों और कालिजों में संस्कृत की पढ़ाई का उत्साहवर्द्धन कर सकती है, अपितु हिमाचल में संस्कृत का एक विश्वविद्यालय भी कायम कर सकती है।

इस समय संस्कृत की शिक्षा उत्तर भारत की अपेक्षा दक्षिण भारत में अधिक फल रही है। इसका एक कारण यह है कि दक्षिण भारत में संस्कृत पढ़ने वालों की संख्या कहीं अधिक है। और सम्भवत: इसी लिए वहां के लोगों को अपने धर्म और अपनी संस्कृति में अगाध श्रद्धा है। इस समय पंजाब, हिमाचल, हरियाणा, जम्मू-कश्मीर और दिल्ली में कोई ऐसा शिक्षा-केन्द्र नहीं जहां संस्कृत की विस्तृत स्तर पर शिक्षा दी जा सके। क्यों न हिमाचल सरकार इस मामले में पहल करे। भारत सरकार उसे प्रत्येक प्रकार की सहायता देने को तैयार हो जाएगी। और यदि हिमाचल में एक संस्कृत विश्वविद्यालय कायम हो जाए तो सारे देश के कोने कोने से विद्यार्थी वहां आ सकते हैं।

संस्कृत में आपको इतना साहित्य मिल सकता है, जो शायद अंग्रेजी में भी न मिले। इस विश्वविद्यालय में इस पर भी अनुसन्धान हो सकता है। क्या मैं आशा करूं कि डा० परमार मेरे इस सुझाव पर सहानुभूतिपूर्ण विचार करेंगे? और अपनी उन भावनाओं को, जिनकी अभिव्यक्ति उन्होंने संस्कृत दिवस पर की है, क्रियात्मक रूप देने का प्रयास करेंगे?

— "वीरेन्द्र"

एवं क्षेत्रीय भाषापत्रैः न केवलं समाचार प्रकाशनैरेव संस्कृत प्रसार विकासकार्येषु सहयोगोऽदायि—अपितु श्री वीरेन्द्रेण तथा स्व० ला० जगत्-नारायणेन समर्थसम्पादकीयान्यपि संस्कृतपक्षे लिखितानि। अत्र प्रायेण आंग्लपत्राणां संस्कृतोपेक्षा विशेषतः हिमाचलप्रदेशेऽनुभूता। एतस्य दुःखमस्माकं मनसि वर्तते। कोऽपि आंग्लभाषापत्रकारः समाहूतोऽपि सादरं निमन्त्रितोऽपि संस्कृतसमाचारप्रदानं नाकरोत्। केवलं ट्रिब्यूनपत्रेण एकबारं द्विबारं वा त्रिबारं वा तादृक् समाचाराः प्रकाशिताः।

## विदेशेषु दिव्यज्योतिषो माध्यमेन संस्कृतस्मरणम्

अनेकमाध्यमैः हिमाचल प्रदेशः विदेशैः साकं सम्बद्धः। परन्तु संस्कृतमपि विदेशेषु हिमाचलं स्मारयति दिव्यज्योतिषो माध्यमेन - इति स्वल्पतमोदाहरणं निरूप्यते।

Ramkrishna Sharma
Research-Fellow
Deptt. of Linguistics,
University of California, Barkaley
U. S. A.

आदरणीय शर्मा जी, सादर नमस्कार। यहां पर आने के बाद आज ही पत्र लिखने का मौका मिला। मैंने नवीं कक्षा के बाद आपके पास ब्राह्मण सभा संस्कृत महाविद्यालय शिमला में प्राज्ञ, मैट्रिक तथा विशारद की परीक्षा पास की। तीन वर्ष तक इस प्रकार निरन्तर आपके उच्च विचारों से शिक्षा ग्रहण करने का सौभाग्य मिला। इसके उपरान्त मैं चण्डीगढ़ चला गया था। मेरा एक ब्राह्मण पुत्र का शास्त्रानुसार वास्तविक जीवन ब्राह्मण सभा संस्कृत महाविद्यालय में बना। वह जीवन मुझे अब भी याद करने पर प्यारा लगता है।......"

आपका
— रामकृष्ण शर्मा

१९५९

वाशिंगटन अमेरिका
१६-११-५७

मान्याः आचार्य प्रवराः सादरं प्रणमन्ते '...... दिव्यज्योति संस्कृत मासिकपत्रस्य विशेषाङ्कः प्राप्तः । शतशो धन्यवादाः तत्प्रकाशने विविधसंस्कृतलेखकानां जीवनचित्रादिकानाम् विषये मन्ये च सुमहान् कष्टः कृत खलु । न सुलभमेतत् कार्यं भारते कवीनां सञ्चयग्रहणम् । हर्षास्पदं यद्यपि सुरवाण्यामेतावन्तः प्रबन्धाः निर्मीयन्ते अत्र वाशिंगटननगरे मया होराचतुष्टयपर्यन्तं संस्कृताभ्यासः क्रियते ।......'

— भवत्कुशल काङ्क्षिणी

लीलादेवी

(तत्कालीन अमेरिकायां भारतीय राजदूतपत्नी स्व क्षमापण्डिताया च यशस्विनी पुत्री)

पण्डित एस. पी. शर्मा

KOPAY NORTH
CEYLON
14-10-58

मान्याः ! दिव्यज्योतिष सम्पादकाः

प्रणामाः ।

मत्प्रार्थनामङ्गीकृत्य भवद्भिः प्रेषितं दिव्यज्योतिषः अङ्कद्वयं आनन्दं प्रापत् । सर्वथैवानन्यसामान्यां भवत्पत्रिकां दृष्ट्वा पठित्वा च परमानन्दभरितः ।

एस. पी. शर्मा

श्रीमती कमला रत्नम्, M. A. T. D. (London)

भारतीय राजदूतावास सान्तियागो
चिलि
२८-७-१९५४

आदरणीय आचार्य जी !

दिव्यज्योतिः के जून और जुलाई के अंक प्राप्त हुए । आज कल जब लोगों की रुचि हिन्दी की ओर ही नहीं है, उस समय संस्कृत की पत्रिका निकालना दुस्साहसका ही काम है । आपको इस साहस के लिए बधाई

— कमलारत्नम्

( चिलिस्थभारतीयराजदूतपत्नी )

Indian Embassy
Vientian, LAOS
c/o 56 APO,
18-11-67

प्रिय केशव जी !

"—... आप 'कुमार सम्भवम' की भूमिका अवश्य पढ़ें । इसमें मैंने भारतीय एकता के महान—शिल्पी कवि के बारे में कुछ खोज पूर्ण बातें लिखी हैं अंग्रेजी के महाकवि शैले पर जो कवि का ऋण है उसका भी स्थाली पुलाक न्यायेन प्रतिपादन करने की चेष्टा की है । १९४७ से पहले ऐसी बातें लिखना अपराध था । स्वतन्त्रता के बाद ये सब प्रकाश में आने लगी हैं । इस सामग्री का आप अपने पाठकों को रसास्वादन अवश्य कराएं ।

स्नेह सहित भवदीय
— डा. एस. आर. सहगल

Dr. Satyavrat Shastri
Vyakaranacarya, M A. M.O L., Ph D.
Pandit Manmohan Nath Dar Prof.
of Sanskrit and Ex-Dean,
Faculty of Arts.
University of Delhi.

Swiss Guest House,
3 Convent Road,
Bangkok,
Thailand

30-9-78

मान्येषु बन्धुवर्येषु श्री केशव शर्म महाभागेषु प्रणतय: ।

दिल्लीत: सद्य: सप्तरीवर्सम प्रतिप्रेषितं भवत्पत्रमासाद्य परां कोटिमानन्दस्याध्यगमम् । विश्वज्योतिरित्यभिधानं यच्च प्रचिकाशयिषतितरां प्रियं मे । पत्रिकयैतया भूय उपकृतं संस्कृतानुरागिणामिति नापेक्ष्यते बहु वच: कालेकाले रम्याणि काव्याख्याधिकाधीन्यस्यां प्रकाश्यमानानि सुतरां मुदावहानि प्रेक्षावताम् सुरभारत्या प्रचारे-प्रसारे चास्या: कृतं संकल्पोयमी अरेत्वषभिकाभिरिति स्पष्टम् । तत्र चाहर्निशं भारतभारतीसमर्चनसक्तैर्वा नानाशास्त्रविचक्षणा आचार्यवर्या श्री दिवाकरदत्त शास्त्रिमहाभागकुटुम्बं च तदनुरूपं भवन्तश्च तदपत्यभूता: । प्रार्थयेऽहं भगवन्तं पार्वतीनाथं पत्रिकेयमनुदिनं समेधतां कीर्तिं चाचिरतरसाधारणीं समश्नुवतामिति

अक्तोबरमासस्य पञ्चमेऽहनि अमेरिका कनाडादिदेशान् प्रति प्रस्थानं मे अभिलता तत्रत्यै: न्यूयार्कस्य कोलम्बिया, फिलाडेल्फियास्थ पेन्सिलवानिया मान्ट्रीयलस्थ मैकगिल सिन्सिनैटिराहुनस्थ ब्राक् वैन्कूवरस्थ ब्रिटिश कोलम्बिया, मेडीसनस्थ विस्कान्सिन सियाटलस्थ वाशिंगटन्, लोस एञ्जलस्थ "कैलिफो" निमाभिधानाविश्वविद्यालयै: भाषणानां कृते ऽहमामन्त्रित: ।

तानि सम्पाद्य नवाम्बर मासस्य षोडशेऽहनि पुनरपि बैंकाकपुरमुपेतास्मीति सभासतो मे निवेदनमवगमयतु । — सत्यव्रत:

# संस्कृतज्ञा: प्रदेशनेतार:, प्रशासका: संस्कृतञ्च

## कथं न संस्कृतप्रसारविकासकार्येषु - अपेक्षिता प्रगति: ?

### निष्कर्ष :--

जनता संस्कृतपक्षे वर्तते । प्रशासनेनापि जनभावनाया आदर: क्रियते एव । प्रायेण सर्वे एव यदा संस्कृतपक्षे सन्ति तर्हि कथं न अन्यक्षेत्रवत संस्कृत-क्षेत्रमपि प्रगतिशीलमस्ति ।

अत्र मया स्वल्पशब्देष्वेव निष्कर्ष: निष्कासित: यदेतदथ यत्र पञ्च-विंशतिप्रतिशत प्रदेशनेतार: पञ्चविंशतिप्रतिशतञ्च प्रशासका:- उत्तरदा-यित्वमत्रत्र वयं संस्कृतज्ञा: पञ्चाशत्प्रतिशतं संस्कृतहानिकरा: संस्कृत-प्रसारविकासकार्येषु न बाधारूपा: । त्रिंशतवर्षकाले मया नि:स्वार्थभावेन एकरूप्यकमपि-अगृहीत्वा - संस्कृतसेवायामन्तर्वाहित: । एषु वर्षेषु एकोऽपि कश्चित् - कार्यमेनमग्रे प्रवर्तयितुं न लब्ध: सहयोगी । यत्र तत्र प्रान्तेषु केचन युवका: कटिबद्धा: बभूवु: परन्तु पश्चात्तेषामपि कथनमिदमेवासीत् - यत् संस्कृतज्ञा एव संस्कृतविरोधिनस्तस्मात्परमकठिनमिद कार्यम् । संस्कृत-ज्ञेषु ९१% मिता: संस्कृतस्य महत्त्वमेव न जानन्ति तर्हि कथमत्र विकासदर्शनं जायेत । यद्यपि प्रदेशनेतार: प्रशासकाश्चापि - अत्र उत्तरदायित्व धारयन्त: परन्तु तेषां संस्कृतपक्षो निर्माणमस्मावश्यकं कर्त्तव्यजातम् । देशे यद्यपि पञ्चाशत - सहस्रेभ्योऽप्यधिकेषु विद्यालयेषु संस्कृतविभागा: परन्तु तेषां अध्यापकानां कदापि एकमञ्चोपरि नोपस्थिता: । केवलं वेतनभोगिन एव सर्वे न तु भविष्यरक्षयितार: । प्रतिविद्यालयमपि तत्रत्यसंस्कृताध्यापकेषु वैमत्यम् एव सति संस्कृतस्य संकटकालेऽपि कथं संस्कृतरक्षा ? सर्वेषु प्रान्तेषु सहस्रश: संस्कृताध्यापका: पाठशालासु महाविद्यालयेषु च सन्ति तेऽपि एकं मञ्च-मपि एकमञ्चाधिष्ठिता: न अभूवन् । निखिलेऽपि भारते विशालतम इमावले संस्कृतप्रसारविकासकार्यमत्र तेषामेव हस्ते वर्तते ये संस्कृतेन भक्तिं न कुर्वन्ति । तेषां समक्षमपि स्वकीयस्योदरस्य पोषणं तथा परिवारपालनमग्रे: साधनेस्तत्वञ्च संस्कृतसेवनम् । एषा परिपाटी परिवर्तनमपेक्षते । यै: संस्कृत-स्याध्यापनेन स्वपोषणं स्वपरिवारपालनञ्च क्रियते तै: स्वयं संस्कृत-सेवार्थं धनेन भारेण च साहाय्यं सम्पादनीयम् । नाचेदस्मिमा सन्ततिर्न नि:स्वा-र्थभावेन संस्कृतसेवां करिष्यति तेन च भारतीया संस्कृति: शनै: २ निष्प्रभावा भविष्यति । वर्तमाने सा तथा जायमाना अपि वर्तते अत: मामकीनमिदं विनम्रनिवेदनं यदत्र प्रदेशस्य संस्कृताध्यापकै:, संस्कृतछात्रै:, संस्कृत-हितेच्छुभि: संस्कृतलेखकै:, ग्रन्थकारै:, पण्डितै:, वैद्यै:, कर्मकाण्डिभि: सर्वैरपि सम्भूय संस्कृतप्रसारविकासकृते पूर्णशक्त्या अग्रे आगन्तव्यमस्ति । अस्य समयस्य याचना यदि संस्कृतज्ञै: न पूर्यते तदा इतोऽधिकं दुर्भाग्यम् न देशस्य वा किमपि भविष्यति । अत: सर्वे संस्कृतज्ञा: सावधाना: भवन्तु ।

## पण्डितप्रवरा श्रीशालग्रामशर्माण:

ये हीदानीं नैनादेवी – संस्कृतमहाविद्यालये सम्मान्यप्राचार्यपदमलङ्कुर्वाणाः विराजन्ते। एते पूर्वं पञ्चाम्बुविश्वविद्यालयस्य संस्कृत विभागे प्रवक्तार अभूवन्। पश्चात् हिमाचलप्रदेशस्य राजकीयसंस्कृतमहाविद्यालयेषु – अध्यापयामासुः इदानीं राजकीयसेवानिवृत्ता: सन्ति। एते हिमाचलस्य प्रतिष्ठिता अध्यापका। विविधशास्त्रनिष्णाता: प्राचीनपाण्डित्यपरम्परायाः हिमचले आदर्शभूता: सन्ति। विशेषत: दर्शनशास्त्रपण्डिता: इमे सन्ति। न केवलं पण्डिता एव परन्तु भारतीयदर्शनमेतेषाँ जीवनेऽपि विद्यते। तदनुरूपमेव स्वकीय जीवनं जीवमाना इमे परमपुण्यश्लोका: संस्कृतज्ञानां कृते आदर्शभूता: स्मरणीयाश्च एवं विद्व-विदुषां भूमिरेष हिमाचल एभिरेव पुण्या भवति। संस्कृतप्रसारकर्मणि महानुभावानामेषां संस्कृतप्राचार्य-प्राध्यापकरूपेण महीयान् योग: प्रार्थये शतायुष्ट्वाय एतेषाम् एवं विद्व० प्रकाशस्तम्भा एवास्माकं पथप्रदर्शनं कर्तुमर्हा:।

## सुश्री रत्नकुमारी-आचार्या

संस्कृतप्रसारविकासमधिकृत्य आचार्यदिवाकराणां पत्न्या: मातृकल्पाया अस्या देव्या यो हि सहयोगोऽभूत् सोऽपि दुर्लभो हिमाचले आप्रातः कालात् सायं पर्यन्तं आचार्य श्री दिवाकराणां गृहे सुरगिर: सेवकानां शिष्याणाम् प्रवाह: सततं प्रवहणशील तेषां कृते जलपानभोजन–निवाससुखसुविधामातृस्नेहदानमिति सर्वमपि अस्या: निःस्वार्थसेवाङ्गभूतमिति सर्वं यदि न लक्ष्येत तु पुस्तकमिदमपूर्णमेव स्यात्। स्वकीयस्य विशालतमपरिवारस्यावश्यकतासु नूनमेवानया न्यूनता कृता स्वसन्तति-सुखसुविधानां तथा चिन्ता न कृता यथा किल शिष्यवर्गस्य सुखसुविधानाम्। एवं विद्वनारीणां विषय एव महर्षिमनुः प्रावोचत् – 'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता:". इति अस्मासु – अस्या शुभाशीर्वादा सततं वर्षन्तु–इति–कामये।

●

## संस्कृतं हिमाचलप्रदेशस्य वर्तमाना: सन्ततिश्च

कुलानुकूल भारतीयसंस्कृतिप्राणस्य संस्कृतस्य संरक्षणपरम्परा विश्वविश्रुता। हिमाचलप्रदेशे युवजनेषु के के स्वप्राणपणेनापि संस्कृतसंरक्षणाय समुत्सेत्स्यन्ति-इति-अव-लोकनीयमस्ति एतस्योत्तरञ्च निकटभविष्यकाल: एव दास्यति। तथापि मया स्वयं युवकद्वय्यां संस्कृतंप्रति–अगाधश्रद्धा दृष्टा। उभावपि-इमौ संस्कृतस्य प्रसार:

विकास:-वा कथं भवेदिति चिन्तयत. अनयो: प्रथम श्री केशव राम शर्मा वर्तमानकाले सोलनस्य राजकीयमहाविद्यालये संस्कृतविभागे कार्यं कुर्वाण संस्कृत-प्रवक्तृपदमलङ्कुरुते लेखकोऽप्ययं संस्कृतस्य संस्कृते लेखनेन संस्कृतप्रसार-विकासकर्मणि सहयोगकरणे संलग्न: एतस्य चर्चा मया पूर्वमेव कृता वर्तते। परन्तु लेखकत्वेन सहैवायं संस्कृतप्रचारकर्मणि पूर्वकालादेव संलग्नोऽभूत्। परिणामत: बहूनि वर्षाणि पूर्वमयं हि: प्र. संस्कृत साहित्य सम्मेलनस्य प्रचारमंत्रीपदमप्यलकरोत्। कदापि कुत्रचिदपि संस्कृतप्रसारमधिकृत्य सहयोगोऽस्यापेक्षितोऽपि प्राप्तोऽभूत्। संस्कृतम्प्रति सर्वदाऽयं जागरूकस्तिष्ठति छात्रेषु अध्यापकेषु च प्रिय—आदर्शरूपश्च।

अस्मिन्नेव प्रसङ्गे द्वितीयोऽस्ति समुल्लेखनीय: श्री कुमारसिंह जिलाधिकारी यो हि सोलनस्य राजकीये संस्कृतमहाविद्यालयस्य प्राचार्यो वर्तते संस्कृतस्य प्रसारमधि-कृत्य न्यायालयेषु संस्कृतज्ञ: यानि प्रकरणानि निर्णीतानि तत्रास्य महनीय एव सहयोग। अनेन अभियोगजयाय प्रमाणादिसङ्कलनेषु यानि कष्टानि सोढानि यावान् च श्रम: कृत: सोऽस्ति नेतरजनसाध्य। अतोऽस्यापि यावती अपि प्रशंसा क्रियेत सा स्वल्पा एव। अहमस्य युवकद्वयस्य सर्वदा मङ्गल कामये एव विश्वसिमि च यदेतादृशजनहस्तेषु प्रदेशे संस्कृतस्य भविष्य: सुरक्षित. इति मदीयो दृढ विश्वास:

# हिमाचलोऽयं किल देवतात्मा

पदे पदे शैवजना:- मिलन्ति
क्वचिच्च शाक्ता: खलु वैष्णवाश्च।

अथापि बुद्धा:-ननु जैनसिक्खा:,
रहोमभक्ताश्च हिमाचलेऽस्मिन्।

●

क्वचिन्महामातृ-विलासपूर्णा: विराजमाना: बहुसिद्धपीठा:।
शिवस्य विष्णोश्च सुशोभनानि, विभान्ति दिव्यानि हि मन्दिराणि।

○

अतो हि कश्चित् कविकालिदास: काव्याङ्गनाया मधुरो विलास:
सुशोभनं सत्यमिदं जगाद हिमाचलोऽयं किल देवतात्मा।



●

# हिंसायास्ताण्डवम्

बंगलादेशप्रतिष्ठापकस्य स्व० शेषमुजीबस्य
हिंसाराक्षसीकवलितः परिवारः ।

****

सूचना—

हिमाचलप्रदेशे संस्कृतस्य प्रसारो विकासश्च लेखमालेयं दिव्यज्योतिष सम्पादकस्य श्री केशव शर्मणः आसीत् या अस्मिन्नाङ्के पूर्णा भवति ।

— व्यवस्थापकः

R. N. 6384/57 Registered No. 10

# उत्तर प्रदेश संस्कृत अकादमी संस्कृत भवनम्

नया हैदराबाद, लखनऊ - २२६००७

## एक लाख रुपये का विश्व संस्कृत भारती पुरस्कार

## विज्ञप्ति

उत्तर प्रदेश संस्कृत अकादमी के द्वारा वर्ष १९८३ से सम्बन्धित उपर्युक्त अन्ताराष्ट्रिय पुरस्कार संस्कृत के ख्याति-प्राप्त एक मूर्धन्य विद्वान् को उनके व्यक्तित्व एव कृतित्व पर दिया जायेगा ।

इसके लिए मूर्धन्य विद्वान स्वयं (यदि वह चाहें) अथवा उनके ग्रन्थ प्रकाशक या उनके व्यक्तित्व एवं कृतित्व से परिचित विशिष्ट विद्वान् या कोई भी व्यक्ति उनके जीवनवृत्त (पास पोर्ट साइज के दो फोटो चित्रों सहित) के साथ उनकी संस्कृत वाङ्मय सेवा से सम्बन्धित पूर्ण विवरण और उनके सर्वोत्कृष्ट ग्रंथ की ८ (आठ) प्रतियां उत्तर प्रदेश संस्कृत अकादमी, संस्कृत भवन, राय बिहारी लाल रोड, नया हैदराबाद लखनऊ-२२६००७ को दिनांक ३१-८-१९८५ (३१ अगस्त, १९८५) तक अवश्य भेज दें। वर्ष १९८३ से सम्बन्धित पुरस्कार के लिए मूर्धन्य विद्वान् का सर्वोत्कृष्ट प्रतिनिधि ग्रन्थ १-१-६१ से ३०-१२-८३ तक की अवधि में प्रकाशित हुआ होना चाहिए । ग्रन्थ पर निम्नलिखित विवरण एवं प्रमाण-पत्र लगाना आवश्यक है ।

१. पुस्तक का नाम
   (स्वच्छ अक्षरों में)
२. लेखक का नाम तथा पूरा पता
   (स्वच्छ अक्षरों में)
३. प्रकाशक का नाम तथा पूरा पता
४. लेखक का प्रमाण—पत्र

मैं प्रमाणित करता हूं/करती हूँ कि उपर्युक्त पुस्तक का प्रकाशन सन् १९------ वर्ष में हुआ है ।

लेखक के हस्ताक्षर ------------

लेखक का पूरा नाम ------------

तथा पता ------------

------------

दिनांक ------

धर्म नारायण त्रिपाठी
— निदेशक —
उत्तर प्रदेश संस्कृत अकादमी संस्कृत भवन,
राय बिहारी लाल रोड, नया हैदराबाद,
लखनऊ - २२६००७ (इण्डिया)

# दिव्यज्योतिः

संस्कृतस्य सचित्रं मासिकम्

★

जुलाई १९८५

शिमला

★

# विषयानुक्रमः


| सं० | विषयः | लेखकः | पृष्ठ |
|---|---|---|---|
| १. | लघुकथा चतुष्टयी ... | सम्पादकस्य — | १ |
| २. | पण्डिता क्षमा ... — | डा. श्यामलाल डोगरा, साधुग्राश्रम होश्यारपुर पञ्जाब ... | ९ |
| ३. | संस्कृत शिक्षक परिषदः कार्यकलापः | ... ... | ११ |
| ४. | उद्बोधनम् ... ... | डा. गङ्गादत्त शास्त्री प्रिंसिपल हि. प्र. सरस्वती संस्कृत कालेज जांगला ... | १३ |
| ५. | संस्कृत शिक्षक परिषद्-विज्ञप्ति — | ... ... | १४ |
| ६. | सम्पादकीयम् — | ... ... | १६ |


## सूचना

यदि किसी मास दिव्यज्योतिः का ग्रंक आपको नहीं मिलता तो तुरन्त कार्यालय को अंग्रेजी मास की समाप्ति पर सूचना भेजें जिस से ग्रंक पुनः आपको भेज सकें।

— व्यवस्थापक
दिव्यज्योतिः

## परिचयः


संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, दूरभाष : 3859

प्रधानसम्पादकः— प्रा० केशव शर्मा म. ए., एम. फिल. साहित्यरत्नम, ,, 8-200

दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-७ (हि.प्र.)

मुद्रकः प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि.प्र.)

स्वामी :—श्रीमती आचार्य रत्नकुमारी शर्मा

जुलाई १९८५, आषाढ़ २०४२ — वर्षम्-२६ अङ्कः १०

वार्षिक मूल्यम् २० रु०

# प्रतिज्ञात्रयी

माधवः- अहो, रे ! अयं कोलाहलः कुतः आयाति ?
सुषमाः- कीदृशः कोलाहलः, त्वया श्रूयते किम् ?
माधवः- शृणोषि कथं नहि, किंचित् कर्णं दत्वा शृणु ?
सुषमाः- कर्णं दत्वा ?
माधवः- आम् आम् कर्णं दत्वा एव ।
सुषमाः- (ध्यानेन श्रुत्वा)
आम् सत्यं, ज्ञातं, माधव ? जानासि कुतः इदम् ?
माधवः- आम्, नागरिकाः शब्दं कुर्वन्ति ।
सुषमाः- एवं नहि ।
माधवः- तु.
सुषमाः- तु कथय किं ज्ञातम् ?
माधवः- अक्तूबर मासस्य २ तारिके अद्य ।
महात्मा गान्धिनः जन्मदिनोत्सवः भवति अद्य ।
सुषमाः- किं त्वं न जानासि आनन्दोत्सवः एषः
माधवः- आम्, ज्ञातम् ।
सुषमाः- आम, एवम्, किं त्वं जानासि अयं कुत्रत्यः आसीत् ?
माधवः- कथं नहि ।
सुषमाः- तु कथय ।
माधवः- अस्य जन्म स्थानं गुजरात प्रान्तः अस्ति ।
सुषमाः- अस्य ग्रामस्य किं नाम अस्ति ?
माधवाः- पोरवन्दरः ।
सुषमाः- किं त्वं अस्य जन्म तिथिम् अपि जानासि ?
माधवः- आम्, सम्वत् १९२५ आश्विन मासः, कृष्णद्वादशी तिथिः ।
सुषमाः- अस्य पितुः किं नाम आसीत् ?
माधव :- अस्य पिता कवा गांधी आसीत् ।
सुषमाः- किं भारतम् अपि अनेन एव स्वतन्त्रं कारितम् ?
माधवः- आम् आम्, अयम् एव भारतं स्वतन्त्रम् अकरोत् ।
सुषमाः- अयं केवलम् अल्पानि एव वस्त्राणि कथं धारयति स्म ?
माधवः- देशस्य आर्थिक दशां दर्शयितुम् ।
सुषमाः- अस्य विषये मया अन्यत् अपि श्रुतम् ।

माधवः- तत् किम् ?
सुषमाः- तत्-इदं यत्-अनेन तिस्रः प्रतिज्ञाः कृताः ।
माधवः- आम्, एतत् अपि सत्यम् ।
सुषमाः- ताः काः काः आसन् ।
माधवः- तासु, मांसं नहि खादिष्यामि ।
इयं प्रथमा प्रतिज्ञा आसीत् ।

सुषमाः- द्वितीया !
माधवः- मदिरापानं न करिष्यामि इयं द्वितीया ।
सुषमाः- तृतीया !
माधवः- ब्रह्मचर्यं परिपालयिष्यामि ।
सुषमाः- अहो ? विलक्षणाः प्रतिज्ञा आसन् ।
माधवः- कथ नहि ।
सुषमाः- गान्धिन; उद्देश्यं किम् आसीत् ?
माधवः- मया पठितं यत् महात्मनः जीवनस्य द्वे उद्देश्ये आस्ताम् ।
सुषमाः- के के शीघ्रं कथय ?
माधवः- कथम !?
सुषमाः- आनन्दः आयाति ।
माधवः- भारतं स्वतंत्र भवेत् इति प्रथमम ।
सुषमाः- द्वितीयम ।
माधवः- सर्वे लोकाः अहिंसाव्रत धारण तथा सत्य पालनं कुर्युः ।
सुषमाः- मम माता कथयति स्म यत् तस्य जीवनं धार्मिक आसीत ।
माधवः- सत्यमेव ।
सुषमाः- तु अस्माभिः अपि बापू महोदयस्य जीवनस्य अनुकरण कर्त्तव्यम ।
माधवः- आवश्यं अवश्यं तस्य जीवनं संसारस्य कृते आदर्शः अस्ति ।
उभौ :—श्री बापूः जयतु ।

●

## रणवीरः

विजयः- अयि भगिनि ? किञ्चित इतः अपि पश्य, इदं किम् अस्ति अत्र ।
विजयाः- अहो ? भवता तु भयभीता कृता । दर्शयतु किम् अस्ति ?
विजयः- किम् नहि पश्यसि इदम् विचित्रं चित्रम ?
विजयाः- अहो नु खलु, अहं बिभेमि इमं चित्रं दृष्ट्वा ।
विजयः- किम् उन्मत्ता जाता असि यत् चित्र दृष्ट्वा भयं करोषि ?
विजयाः- रे भीता कथ न स्याम्, एतादृशं भयंकरं चित्रं दृष्टवा ।

विजय:- कीदृश: भयंकर: ? मनुष्य: अपि कदाचित् भयंकर: भवति ?

विजया:- आम् आम्, भयंकर: एव तु अस्ति। अयं कश्चित् मनुष्य: अस्ति किम् ?

विजय:- तर्हि किम् अस्ति ?

विजया:- भ्रात: ? अयं तु तथा लगति यथा चटका-गृहे एकस्मिन् पंजरे बद्ध: स: सिंह: आसीत्।

विजया:- अयम् अपि तस्य वृद्ध व्याघ्रेण सम: एव अस्ति।

विजय :- वाचाले ? किम् कथयसि ? अयं तु अस्माकं देशस्य गौरवस्वरूप: परमतेजस्वी राजा आसीत्।

विजया:- राजा,

विजय:- आम् राजा, शत्रूणां कूटनीतिभि: चिरकालपर्यंतं पञ्चाम्बु प्रदेशस्य संरक्षक:

विजया:- हुम् एवम् एव अस्ति।

विजय:- आम् एवम् एव अस्ति।

विजया:- किम् त्वम् एतेषां नाम जानासि ?

विजय:- आम् कथं न, अवश्यं जाने।

विजया:- तर्हि कथयतु।

विजय :- एतेषां नाम महाराजा रणजीत सिंह: आसीत्।

विजया:- बहु लम्बं नाम अस्ति। अस्य कश्चित् अर्थ: अपि भवति ?

विजय :- अवश्यम्: अस्य अर्थ: एवम् अस्ति रणजीत: युद्धविजेता तथा सिंह: वनराट्।

विजया:- पश्यतु, स एव अर्थ: आगत: अहम् प्रकथयम् यत् ... ...

सन्ति तु अस्माकं पुस्तकेषु बहूनां महापुरुषाणां कथा: परन्तु अयं कश्चित् नूतन: एव पुरुष: निगत:।

विजय:- नैव नैव, नूतन: नहि बहु पुराण: अस्ति। १७६ षटसप्तति उत्तरं शतवर्ष प्राचीन:।

विजया:- एवम्,

विजय:- २ ये नवम्बरे एषां जयन्ती अधुना एव जाता।

विजया:- माम् एषां सकलां कथां कथयतु, एवम् आनन्द: नैव आगच्छति।

विजय:- कथां शृणु, परं मध्ये मध्ये हुंकारं कुर्वाणा शृणु। येन अहं जानीयां यत् त्वम् शृणोषि।

विजया:- चिन्तां न कुरु अहं 'हुम् हुम्' एवं करिष्यामि।

विजय:- तर्हि शृणु. महाराजा श्री रणजीतसिंहस्य पितु: नाम महासिंह: आसीत्। तथा मातु: नाम मलवाई आसीत्। अस्य जन्म १७८० ईशव्यां नवम्बरस्य २ तारिकायाम्।

विजया:- एवम्,

विजय:- एतेषाम् एकं नेत्रं बाल्यकाले नष्टम् अभवत् ।

विजया:- अहो नु खलु, तत कथम् ?

विजय:- चेचक नामक: एक: रोग: भवति, तेन एव रोगेण ।

विजया:- सत्यम्. अग्रे ।

विजय :- एतेषां विवाह: पंचवर्षाणाम् अवस्थायाम् एव अभवत् ।

विजया:- किम् अधुना अपि पञ्चवर्षाणाम् अवस्थायाँ विवाह: भवति ?

विजय:- आम् बहुषु स्थानेषु अद्य अपि बाल्य काले एव विवाह कुर्वन्ति, किन्तु भगिनि ? एतत् शास्त्रविरुद्धम् अस्ति । अस्माक शास्त्रं: अस्माकं जीवनं चतुर्षु भागेषु विभक्तम् । इदानीम् २५ वर्षानन्तर पुरुषस्य तथा १७ वर्षानन्तरं स्त्रिय: विवाह: समुचित: अस्ति ।

विजया:- किन्तु एतत् सर्वं त्वं कथं जानासि ?

विजय :- पिता एतत् सर्वं कथितम् आसीत् ।

विजया:- ज्ञातम्, मया चिन्तितं यत् स्वयम् एव त्वम् एता: वार्ता: करोषि अस्तु, अग्रे ?

विजय:- सप्तदश वर्षाणाम् अवस्थायाम् अनेन स्वकीयं सर्वं राज्यं सुशासितम् ।

विजय:- एवम्, अयम् महान् वीर: आसीत् । अयम् अफगानानां भवेन अपि पञ्चाम्बु प्रदेश मुक्तम् अकरोत् । यदा अस्य राज्याभिषेक: अभवत्, तदा लवपुरे अस्य नाम्न: मुद्रानिर्माणस्य तक्षशाला स्थापित: अभवत् ।

विजया:- अहो प्रभाव:,

विजय:- एतावत् एव नहि अपितु गौराङ्गा: अपि एषाम् प्रत्यक्ष-विरोध कर्तुम् असमर्था: आसन् ।

विजया:- इयती वीरता ?

विजय:- केवलं वीर: एव नहि धर्मात्मा अपि आसीत् । वैदेशिकानां कृते रणजीतसिंहस्य आदेश: आसीत् यत् मम पार्श्वे निवसमाना: ते गोमांसभक्षणं तथा कूर्चकर्तनं नहि कर्तुं शक्ता: ।

विजया:- एवम्, अन्यत् ।

विजय:- शाह शुजाख्यं पराजित्य अनेन 'कोहेनूर हीरकम् अपि प्राप्तम् । अस्य इच्छा आसीत् यत् तत् हीरकम् जगन्नाथ पुर्याम् भगवत: जगन्नाथस्य श्री विग्रहं विभूषयेत् ।

विजया:- परमा निष्ठा आसीत् भगवति किं जानासि अस्य महापुरुषस्य अवसानदिनम् ?

विजय :- १८३९ जून मासस्य अष्टाविंशति तारिकायाम् अयं गोलोकं गत: । महाराजेन सह तस्य चतस्र: महिष्य: तथा दश अन्या: ललना: सतित्वं प्राप्ता: ।

विजया:- अहा, आनन्दस्य उपरि करुणरसापात: ?

विजय :- अनेन विश्वनाथमन्दिरस्य शिखर: स्वर्णपत्रै: आच्छादित: ।

विजया:- कुत्र इदम् मन्दिरम् ?

विजय:- काश्याम् ।

विजया :- अन्यत

विजय:- एवं सुकरचकिया यद्यपि पञ्जाबस्य एका लघुभूमि: आसीत् परन्तु अनेन प्रकारेण सुकरचकियाया: सर्बदारस्य पुत्र: भूत्वा अयं "पञ्जाबकेसरी" अभवत् ।

विजया:- वयम् अपि पञ्जाबकेसरिण: भविष्याम: ।

विजय :- अवश्यम् ।

उभौ -रणबीर: रणजीत: विजयते ।

## रेलगन्त्री

श्याम:- पितामह ? भवता एकस्मिन् दिने कथितम् आसीत् यत् कदाचित अहं युष्मान् रेलगन्त्री कथां श्रावयिष्यामि ।

श्यामा:- आम् आम्, सत्यम् पितामह सत्यम् अद्य आवाम् अवश्यम् एव रेलगन्त्र्या विषये किंचित् श्रोष्याम: ।

पितामह:-अस्तु, पुत्रौ श्रावयामि-श्रावयामि परं बहु कोलाहल न कुरुताम् ?

उभौ :- एते वय मौनिन: संजाता:, इदानीं श्रावयन्तु ।

पितामह:-अयि बालकौ पश्यन्तु तावत्. अधुना रेलगन्त्रीम् दृष्ट्वा किमपि आश्चर्यं न कुर्वन्ति लोका: ।

उभौ :- नैव तात, नैव, वयं तु कुर्म: ।

पितामह:-युवाम् अद्य पर्य्यन्तम् ग्रामीणवातावरणे निवसथ: स्म अत एव, परन्तु इयम् इदानीं ग्रामेषु अपि प्राप्ता भविष्यति ।

उभौ :- एवम् ?

पितामह:- आम् ।

श्याम :- अस्तु, भवान अथ अग्रे कथयतु ।

पितामह:-आम्, शृण्वन्तु अद्यापि व्यापारस्य तथा यातायातस्य दृष्ट्या रेलगन्त्री सर्वेषु अधिक: आश्चर्यजनक: आविष्कार: अस्ति ।

श्यामा :- इयम् एकबार कति लोकान् नयति पितामह ?

पितामह:-अनुमानत: एकसहस्रनरान् ।

श्याम :- रेलगाड्या: गति: कियती प्रति होरा अस्ति।

पितामहः- इयं प्रतिहोरायां ४० मीलानां गत्या: चलति। सुप्ता: अपि लोका: १५०-२०० मीलानां यात्रा सुखेन कर्तुं शक्नुवन्ति।

श्यामा :- तात ! किमस्या आकृति: यथा वयम् इदानीं पश्याम: यदा अस्या आविष्कार: कृत: तदा अपि एतादृशी एव आसीत्।

पितामहः- नहि तात ? अस्या: यत् रूपम् अद्य अस्माकं समक्षे अस्ति अस्य निर्माणे पूर्णा: शताब्दा लगिता:।

श्याम :- अस्तु अधुना भवान् एतत् अपि कथयतु यत् इयं केन प्रकारेण चलति।

पितामहः-इमाम् इंजिन नामकं यन्त्रं समाकर्षति।

श्यामा :- इदं इंजिन यन्त्रं कथं चलितुं शक्नोति।

पितामहः- बाले ? इदं इंजिन यन्त्रं वाष्पेण प्रचलति।

श्याम :- आम् ज्ञातम्। परम् एतत् अपि तु कथयतु यत् अस्य निर्माणं केन कृतम्।

श्यामा:- आम् पितामह ? इयं वार्ता तु विस्मृता एव आसीत्।

पितामहः- इंजिन यन्त्रस्य सुधारकर्तार: तथा निर्मातार: बहव: जना: सन्ति। परन्तु विशेषतया इंजिन निर्माता जेम्स वाट नामक: आविष्कारक: मन्यते।

श्याम :- अस्य जन्म कदा अभूत् ?

पितामहः- १७३६ ईशव्याम्।

श्याम :- कुत्र ?

पितामहः- ग्रीनोक (क्लाइड) स्थाने।

श्याम :- तर्हि इंजिनयन्त्रस्य आविष्कार: पाश्चमायाम् अभूत्।

पितामहः-नहि बाल ? अस्य आद्य: आविष्कर्ता तु मिस्र देशीय: अभवत्। यस्य नाम "हीरो" आसीत्।

श्याम !: तात ? भवान् कथयति यत् भारते अपि पुरा अनेके आविष्कर्तार: आसन् आधुनिकसमस्तआविष्काकाणाम् अपेक्षया तै: एतेभ्य: अपि अधिकानाम् आश्चर्यजनकआविष्काराणां समन्वेषणं तथा निर्माणं कृतम्।

पितामहः- आम् बाले ? एतत् सत्यम् अस्ति। वेदेषु तथा अन्येषु भारतीय-शास्त्रेषु सर्वाणि एव ज्ञानविज्ञानयो: वस्तूनि अद्यापि पर्याप्तमा-

आयां मिलन्ति । अस्मिन् विषये पुनः कदाचित् चर्चां करिष्यामः ।

श्याम :- एवम् अग्रे ?

पितामह :- अथ अनन्तर अनेक सघर्षान् सहमानेन जार्ज स्टीफनसनेन सितम्बरस्य २७ तारिकायां तथा १८२५ ईशवीयाम् नूतन मार्गः उद्घाटितः स्टीफन सन निर्मिता प्रथमा रेलगन्त्री संसारे अचलत ।

श्यामा:- प्रथमा रेलगन्त्री ?

पितामहः-आम् प्रथमा ।

श्याम :- अग्रे !

पितामह :- यदा इयं रेलगन्त्री संसारे प्रथमं २ प्रचलिता तदा एनां दृष्ट्वा लोकाः भयभीताः भवन्ति स्म । तदा इङ्गालानां स्थाने काष्ठानि एव ज्वलन्ति स्म । कुत्र चित् जलादिकं तथा काष्ठानि समाप्तानि भवन्ति स्म ।

उभौ :- अथ इदानीम् ?

पितामहः-इदानीं तु एताः वाष्पगन्त्र्यः अगारैः तथा विद्युता अपि चलन्ति ।

श्यामाः- तदा तु महान् सुधारः अभवत् आसु ।

पितामहः- आम्, एकस्यां शताब्द्याम् अस्मिन् विषये अनेकाः महत्वपूर्णाः सुधाराः अभवन् ।

उभौः- भवान् कदाचित् वैज्ञानिकविषये अवश्य कथयत ।
पितामहः- एवम् ।

# रेडियो

माता :- प्रिय बालकाः ? अहम् अद्य अस्य रेडियो यन्त्रस्य विषये किञ्चित कथयामि ।

बालकः:- हे मातः, आम् अवश्यं-आम् ।

बालिका:- मातः ? किं नाम अस्य चित्रस्य ?

माता :- बालिके ! यन्त्रस्य एतं 'रेडियो' कथयन्ति ।

बालकः:- आम् जानामि अहम् रेडियो यन्त्रम् ।

बालिका:- मातः ? इदं आश्चर्यजनकं यन्त्र केन निर्मितम् ।

माता :- श्रूयताम्, अस्य निर्माता गुगलीमो मारकोनी आसीत्।

बालकः- अस्य जन्मभूमिः कुत्र आसीत् ?

माता :- अस्य जन्म भूमिः इटली देशः आसीत् । अस्य जन्म २५ अप्रैल १८८४ ई० बोलान नगरे अभवत् ।

बालिका:-मातः. अस्य रेडियो यन्त्रस्य निर्माणं स कथम् अकरोत् ।

माता :- तेन सर्वं प्रथमं अस्य अन्वेषणं कृत यत् शब्दः नित्यः अस्ति ।

बालकः- किम् अस्माकं पूर्वजाः भारतीया इमं रहस्यं नैव जानन्ति स्म ?

माता :- कथं न तात । निरुक्तादिग्रन्थेषु तैः लिखितं शब्दस्य व्याप्तिसम्बन्ध-विषये ।

बालिका:-अस्तु, अग्रे कथयतु ।

माता :- बालाः, युष्माभिः दृष्टं स्यात् ।

बालकः- किम् ?

माता :- एतत् एव यत् यदा कस्मिन् चित् जलतडागे वयं पाषाणप्रक्षेपं कुर्मः तदा यत्र पाषाणाघातः लगति तस्मात् स्थानात् तरंगसमूहः प्रादुर्भवति ।

उभौ :- आम् आम् मातः, असौ च तरंगसमूहः तडागतटपर्यन्तं विस्तारं प्राप्नोति ।

माता :- शोभनम्, विस्तारं प्राप्य च पुनः जले एव विलीनः भवति अस्या एव वार्ताया अन्वेषणं मारकोनी महोदयेन कृतम् ।

बालिका:-केन प्रकारेण ।

माता:- तेन चिन्तितं यत् यथा जले तरंगप्रादुर्भावः भवति । तथैव अस्माकं शब्देषु अपि तरंगोत्पत्तिर्भवति असौ शब्दतरंगसमूहश्च सर्वस्मिन् आकाशे विस्तारं प्राप्य अन्ते आकाशे एव विलीनः भवति । यदा एवम् अस्ति तर्हि कथं न शब्दतरंगाणां संकलनं कृत्वा तरंगाणां कृते विद्युत् रूपं दत्वा विदेशेषु अपि स्वदेशीयानां वार्तानां श्रवणं भवेत् ।

उभौ :- साधु मातः साधु,

माता :- अस्य सिद्धान्तस्य अनुसारं तेन अस्य रेडियो यन्त्रस्य निर्माणः कृतः । यो हि युष्माकं समक्षमस्ति ।

# पण्डितायाः क्षमायाः जन्मदिन-मालक्षय

पण्डिताक्षमाराव-माङ्मय-निबन्धस्पर्धा - १९८५ ई०

## पण्डिताक्षमायाः निसर्गप्रकृतिप्रीतिः

डा० सीताराम गणेश देसाई

---

### किञ्चिद् वक्तव्यम्

पण्डितवर्यसीताराम गणेशदेसाईमहाभागगुम्फिते 'पण्डिता क्षमायाः निसर्गप्रीति', नामैकादशपृष्ठात्मकनिबन्धे सरला भाषा सहजाशैली चोपलभ्यते श्रीमत्याः पण्डितायाः जीवनविषये कृतिविषये च किञ्चित प्रतिपादित समारम्भेऽत्र निबन्धे ।

'उपमा कालिदासस्य' इति ख्यातिमनुसृत्य 'पण्डिता क्षमा कालिदासपदवीमर्हति' इत्युक्तं श्रीमतः पं० भटमहोदयस्य श्रीज्ञानेश्वरचरितस्य प्रस्तावनामधिकृत्य देसाई महाभागेन:—

"भारतस्य महाराष्ट्रस्य च परमं भाग्यमेतद् अस्या रूपेण नूतनः कालिदास उपलब्धः ।"

कालिदासः क्षमा बभूवेति प्रस्तावनालेखकस्याभिप्रायो विशदी कृतोऽत्र ।

उपमावर्णनप्रसंगे देसाईमहाभागेन पञ्चपृष्ठात्मकः संग्रह कथामुक्तावलीत सविकरो विहितो यथा शृङ्गारवर्णनंशालिक्षेत्र वर्णनं, प्रदोषसमयः, झञ्झावात., रात्रिवर्णनं, प्रशान्तता श्रीनगरवर्णनम्, आबुवर्णनम्— इत्यभिधानेषु श्री तुकारामचरित्रश्रीरामदासचरित · श्री शङ्करजीवनाख्यान - कथापञ्चक-ग्रामज्योतिः सत्याग्रहगीतासु मधुरासु रचनासु उपमानानि संगृहीतानि । प्रतिपादितं यथा पण्डितवर्येण :—

'प्रकृतिस्थवस्तुषु मानवधर्माणां समारोपः ——......——मणिकाञ्चनसंयोगपण्डितायाः

साहित्ये ।" अपि च "अस्मिन् लघुनिबन्धे तु दिङ्मात्रं कानिचित् प्रतिग्रन्थात् संचितानि ।"

सुलभो विहितः सञ्चयः लक्ष्ये लक्षणं प्रवर्तते । काव्य प्रतिपादिता रीतिरनुवर्तनीया । युक्तम युक्तं वा किञ्चित् प्रतिपादनीयम । कथ किमिति सञ्जातमिति स्पष्टं वक्तव्य निश्चप्रचम प्रकटनीयश्चरितस्य महिमा । आचरणीयः परिपोषः । अवधारणीयः प्रयोगः अवलोकनीयः परिणामः । निश्शङ्कं भाव्यम ।

पण्डिता क्षमाराव रचित संस्कृत वाङ्मयस्य गरिमाणं द्योतयितुं स्वनामधन्यायाः प्राचीनार्वाचीनसंस्कृति भाषा कला कलापरचनासु सिद्धहस्तायाः धन्यायाः लीलाराव दयालमहाभागायाः संस्कृतनिबन्धपर्यायोजनार्थं स्तुत्योऽयं प्रयासः । अत्र कल्पायाः सङ्कल्पस्य मधुरोऽयं परिणामः — एतत् प्रस्तुतो निबन्धः यशसि सम्माने च समुद्गतो विद्यते । शुभः समारम्भः संस्कृतानुरागिणां मोदाय कल्पते । प्रतिवर्षं निबन्धपर्यायाः रूपमुत्तरोत्तरं वृद्धिमुपयास्यति— इति स्वभावजमेव वचिश्चदानंद स दोदनयति संस्कृत वाङ्मयप्रचारैकतानेषु आस्थेय परमानन्दवहा ।

गुणगणमण्डितां तां पण्डितां कः स्तोतुं क्षमः– यया ग्रन्थरत्नानि निर्मितानि निर्मितानि समर्पितानि काव्यसाहित्य श्री वृद्धिहेतवे ?

गुरौ ४ जुलाई, १९८५ तमे ख्रीष्टाब्देऽहमभिनन्दनकुसुमाञ्जलिमर्पयन् आत्मनो गौरवमनुभवन् विरमामि— शं समीहे,

कृतकृत्यः

श्यामलालः डोगरा

२८ ६-१९८५ साधुआश्रमः होश्यारपुर १४६ २१

पाण्डुलिपि क्षमारावमहाभागायाः दुर्लभो हस्तलेखः ।

हिमाचलप्रदेशे संस्कृतस्य प्रसारो विकासश्च विषयममु मधिकृत्य लिखितपुस्तकस्यास्य प्रथमभागेऽस्माभिः "हिमाचल प्रदेशे संस्कृतस्य प्रसारविकासभवनशिलान्यासः" शीर्षकेण-प्रदेशमुख्यमन्त्रिणा सह विशेषविचारविमर्शनस्य प्रसंगः वर्णितः। तत्फलस्वरूप प्रशासन कार्यालये जाता संस्कृतप्रतिनिधीनां प्रशासनाधिकारिणां च सम्मेलनम्। गृहीताः केचन निर्णयाश्च। तद्दिनकार्यजातमत्र पाठकानां सविधे समुपस्थाप्यते।

## संस्कृत अध्यापक संघ तथा संस्कृतपरिषद के साथ दिनांक ८-५-८५ को हुई बैठक की कार्यवाही

आयुक्त एव सचिव (शिक्षा) की अध्यक्षता में संस्कृत शिक्षक परिषद् तथा संस्कृत अध्यापक संघ की बैठक दिनांक ८-५-८५ को साय ४ बजे आयोजित हुई जिस में निम्नलिखित सदस्यों ने भाग लिया :—

१. श्री महाराज कृष्ण काव ... आयुक्त एव सचिव (शिक्षा)
२ श्री एम. आर. पाठक ... शिक्षा निदेशक
३. श्री एम. डी मेहता ... अवर सचिव (शिक्षा)
४. श्री शंकर दास शर्मा ... अनुभाग अधिकारी— क
५. श्री दुर्गादत्त शास्त्री ... महासचिव संस्कृत शिक्षक परिषद् हिमाचल प्र. राजकीय माध्यमिक पाठशाला अनाडेल।

### निर्णय

इस बैठक में ४-४-१९८५ को हुई मीटिंग की कार्यवाही पर पुनर्विचार किया गया तथा निम्नलिखित निर्णय लिये गये।

मांग न० २ तथा ३ :- शिक्षा निदेशक से अभी तक टिप्पणी प्राप्त नहीं हुई है। शिक्षा निदेशक कृपया एक मास के भीतर अपनी टिप्पणी भेजें।

### शिक्षा निदेशक

मांग न० ४ : - सचिव महोदय ने निदेशक को सूचित किया कि ग्रोवर कमेटी ने पदों के बारे अपनी रिपोर्ट देनी है तथा भविष्य में जब भी स्कूल हाई स्कूल बनाया जाये एक अतिरिक्त संस्कृत अध्यापक का पद स्मायोजित किय जाए

मांग नं० ५ : यह निर्णय लिया गया कि संस्कृत की परीक्षा के लिये पेपर हो तथा संस्कृत बोर्ड से भी इस मामले में परामर्श करके निदेशक एक मास में अपनी रिपोर्ट भेजें।

मांग न० ६ : - यह निर्णय लिया गया कि संस्कृत पाठशालाओं के अध्यापकों का

वेतनमान हाई कोर्ट के निर्णय के अनुसार कालिज के अध्यापक के अनुसार स्वीकृत किया जाये। इस मामले में हम पंजाब का अनुसरण नहीं कर सकते क्योंकि पंजाब में संस्कृत को इतनी महत्ता प्राप्त नहीं है। सचिव महोदय ने आदेश दिये संस्कृत पाठशालाओं को संस्कृत महाविद्यालय के अनुसार स्वीकृत किया जाये तथा इन पाठशालाओं के कर्मचारियों का वेतनमान यू. जी. सी के सिफारिशों के अनुसार होगा यह भी निर्णय लिया गया कि हाई कोर्ट में जो याचिका चल रही है उसको वापिस ले लिया जाये क्योंकि संस्कृत पाठशालाओं के विद्यार्थी यूनिवर्सिटी द्वारा लीए गये शास्त्री को परीक्षा देते हैं और इस प्रकार की परीक्षा स्कूल बोर्ड द्वारा नहीं ली जाती है तथा जो निजीरूप से संस्कृत महाविद्यालय प्रदेश में चलाये जा रहे हैं उन के बारे में शिक्षा निदेशक एक मास के भीतर रिपोर्ट देवें तथा राजकीय संस्कृत महाविद्यालय के पदों के लिये भर्ती तथा पद उन्नति के नियम बनाये जायें तथा इस समय जो भी अध्यापक कार्यरत हैं उनकी नियुक्ति सर्विस कमीशन द्वारा कराई जाये। यूनिवर्सिटी से कहा जाये कि भविष्य में किसी निजी रूप से चलाये जा रहे संस्कृत महाविद्यालय को मान्यता न देवें। आचार्य पदों के भर्ती के जो नियम बनाए जाये उस पर युनियन की सहमति भी प्राप्त की जाये तथा जो कार्यरत कर्मचारी है उन को स्करीन कमेटी द्वारा चयन करवाया जाये।

## शिक्षा निदेशक

मांग नं० १३ :—यह निर्णय लिया गया कि निदेशालय में श्रीमती टंडन संस्कृत अध्यापकों के विषय को देखेगी तथा इस समय जो विभाग में संस्कृत को जानने वाले जिला अधिकारी है वे इन संस्कृत महाविद्यालयों का निरीक्षण किया करें।

मांग नं० १४ :—सचिव महोदय ने आदेश दिये है कि जिला सिरमौर व शिमला जिला के रिक्त पदों को शीघ्र भरा जाये।

मांग नं० १५ १६ तथा १७ :—शिक्षा निदेशक अपनी टिप्पणी इस बारे में एक मास के भीतर भेजें।

धन्यवाद के साथ बैठक समाप्त की गई। हस्ताक्षर

आयुक्त एवं सचिव (शिक्षा)

हिमाचल प्रदेश सरकार

सं० शिक्षा–११-क (४) ५-०५ दिनांक शिमला-१७१००२, २० मई ८५

प्रति लिपि प्रेषित की जाती है।

१ शिक्षा निदेशक, हिमाचल प्रदेश, शिमला–१

२ श्री प्रेमलाल शास्त्री जनरल सैक्रेटरी, हाई स्कूल मलथाबल, जिला बिलासपुर।

३. अनुभाग अधिकारी क हिमाचल प्रदेश सचिवालय शिमला-२

अवर सचिव (शिक्षा) हिमाचल प्रदेश सरकार

# उद्बोधनम्

सदा भज रे प्रभुं सत्यम्
त्वदीयं जीवनाधारम्
महान्तं निर्विकारं तम् ।
सदा शुद्धं तथा बुद्धम् ॥

यतो जातो जगत्सर्वम्
प्रलीनं जायते यस्मिन् ।
विपत्काले त्वदीये यः
सहायो वर्तते नित्यम् ॥
सदा भज.. ...

यथा दृष्ट्वा निशानाथम्
समुद्रो हर्षतामेति ।
तथा त्वं भावयेत्थं तम्
शरण्यं प्राणिनाँ सर्वम् ॥
सदा भज......

जगत्कार्येषु सर्वेषु
तदीयं ध्यानमाधेहि ।
स्मरत्वं कालमायान्तम्
विभेहि पातकान्नित्यम् ॥

भवेऽस्मिन् किं जगत्सारम्
विचारं किन्नवं कुरुषे ।
विहायाज्ञानसन्तापम्
विजानीहि चिदानन्दम् ॥

परेषाँ स्वात्मरूपत्वम्
विचिन्वन् लोककल्याणम् ।
हितापेक्षो समेषां त्वम्
प्रसादय सच्चिदानन्दम् ॥

★ ★ ★
डा० गङ्गादत्त शर्मा एम. ए.
(संस्कृत हिन्दी) वेदाचार्य,
साहित्याचार्य,
साहित्यरत्न काव्यतीर्थ

भाव एकता ★ "संघे शक्तिः कलौ युगे" ★ कर्म एकता ★

# हिमाचल प्रदेश संस्कृत शिक्षक परिषद्

# की ओर से

# संस्कृत स्नातकों से अनुरोध

हिमाचल प्रदेश के समस्त संस्कृत शिक्षक वर्ग को यह जान कर हर्ष होगा कि प्रदेश स्तर पर नवगठित संस्कृत शिक्षक परिषद् ने एक वर्ष का कार्यकाल पूरा कर लिया है संस्कृत जगत का यह परम सौभाग्य है कि संस्कृत शिक्षक वर्ग भी समय की गति को पहचानते हुए संगठित हो कर संस्कृत एवं संस्कृतज्ञों के उत्थान के लिए अग्रसर हुआ है। आदरणीय आचार्य श्री दिवाकर दत्त शर्मा संस्थापक संस्कृत शोध संस्थान, भारती विहार, मशोबरा (शिमला) के संरक्षकत्व में तथा श्री प्रो. केशव शर्मा सम्पादक दिव्यज्योतिः के परामर्श से अन्तर्गत २० मई १९८४ को परिषद् का विधिवत चुनाव हुआ। प्रदेश स्तर पर नवगठित परिषद् को प्रदेश भर में जिला एवं खण्ड स्तर पर संगठित करने तथा सदस्य संख्या को बढ़ाने में अधिकतर जिलों से पर्याप्त सहयोग प्राप्त हुआ सभी ओर से समर्थन मिलने के कारण परिषद् अपने उद्देश्यों के अनुसार लक्ष्य प्राप्ति की ओर उत्तरोत्तर प्रगति पर है।

परिषद् की ओर से प्रदेश सरकार को गतवर्ष १७ सूत्रीय मांगपत्र दिया गया। जिस पर सरकार की ओर से अनुकूल प्रतिक्रिया हुई। शिक्षा विभाग द्वारा मांग पत्र पर विचार के लिए परिषद् के प्रमुखों को दो बार आमन्त्रित किया गया तथा अनुकूल वातावरण में विचार विमर्श हुआ। परिणाम स्वरूप संस्कृत पाठशालाओं को महाविद्यालय के स्तर में मानना तथा उसके अनुरूप आचार्यों को प्राध्यापक पद एवं वेतनमान देने पर सरकार सहमत होगई है। इसके अतिरिक्त संस्कृत अध्यापकों के अल्पकालिक प्रशिक्षण (सेमीनार) संस्कृत दिवस समारोह में परिषद को विश्वास में लेना आदि मांगों को मान लिया गया है अन्य सभी मांगें अभी सरकार के विचाराधीन है। प्रदेश में संस्कृत भाषा को अनिवार्य करने के लिए शिक्षा बोर्ड, प्रदेश विश्वविद्यालय, शिक्षा विभाग परिषद् का सम्मिलित विचार विमर्श प्रस्तावित है।

परिषद् के उदय काल में ही इतनी उपलब्धि आपके सहयोग और प्रेरणा का परिणाम है, किन्तु अभी भी प्रदेश में परिषद् की सदस्यता नाम मात्र की ही है। "आज संगठन का युग है।" यह जानते हुए प्रत्येक संस्कृत शिक्षकों को परिषद् का सदस्य होना अनिवार्य है इसलिए आपसे अनुरोध है कि 'उद्धरेदात्मनात्मानम्" इस गीता वचन के अनुसार तन से, मन से और धन से परिषद् को संगठित रूप प्रदान कर इसे सशक्त बना कर गौरव प्रदान करें। यह आपका पुनीत कर्तव्य है प्रत्येक संस्कृत शिक्षक अपने परिचित प्रत्येक सहयोगी को परिषद का सदस्य बनाकर सदस्यता अभियान को सफल बनाएं।

## "उत्तिष्ठत ! जाग्रत !! प्राप्यवरान्निबोधत !"

| प्रधान :- | मुख्य संयोजक महासचिव :- | महामन्त्री :- |
|---|---|---|
| गोविन्द राम शर्मा | दुर्गादत्त शर्मा | प्रेम लाल शर्मा |
| रा० उ० पा० सावड़ा | रा० मा० पा० अनाडेल | रा०उ०पा० मलयावर |
| (शिमला) | (शिमला) | (बिलासपुर) |

# सम्पादकीयम्

## " प्रशासनस्य जागरूकता "

इदानीं श्रीवीरभद्रसिंहप्रशासनकाले हिमाचलप्रदेशेऽत्र विशिष्टा चर्चा संस्कृतस्य, संस्कृतज्ञानाञ्च प्राशासनिककार्यालयेषु क्रियमाणा निरन्तरं श्रोतुं शक्यते ।

मुख्यमन्त्रिमहाभागस्य निर्देशेन सर्वेऽपि यथाकथञ्चित्संस्कृतस्योत्थानाय मुख्यसचिवः शिक्षासचिवश्च विशेषेण कार्यं कुर्वाणौ स्तः । अस्मिन् वर्षे प्रारम्भत एव नूतनमन्त्रिमण्डलगठनोपरान्तं संस्कृतज्ञानां प्रशासनिकाधिकारिणाञ्च सम्मिलितविचारविमर्शः जायमानो वर्तते इति हर्षास्पदं नः ।

## निदेशालयस्य धृष्टता

मुख्यमन्त्रिणः-आदेशानां पश्चादपि अथ च शिक्षासचिवादीनां बहुबारं निर्देशोपरान्तमपि हिमाचलस्य शिक्षानिदेशालयो न जाने कथं संस्कृतस्य विरोधमेव कुर्वाणस्तिष्ठति । निदेशकप्रभृति सर्वेऽपि कर्मचारिणस्तत्र संस्कृतज्ञानां संस्कृतस्य चोपेक्षाकरणे शूरत्वानुभवं कुर्वन्ति इति परमखेदविषयः । संस्कृतम् भारतीयसंस्कृतेः मूलम् । यो निदेशालयः संस्कृतस्योपेक्षां कुरुते न जाने शिक्षाया असौ किं करिष्यति ? सर्वजगन्माता एतान् अज्ञान् सद्बुद्धिं प्रयच्छेत इति प्रार्थना ।

## संस्कृतज्ञानां संगठनम्

गतेभ्य ३० त्रिंशद्वर्षेभ्योऽनवरतं प्रदेशस्य संस्कृतज्ञाः बारं बारं प्रतिबोधिता अपि नात्र ध्यानं यच्छन्ति इति प्रतीयते हि० प्र० सं० शिक्षक परिषदः विज्ञप्त्याः । सहैव मया इदमपि - अनुभूयते यदिदानीं केचन संस्कृतस्य हानिकरणे संलग्नाः । मया प्रबोध्यन्ते प्रदेशस्य संस्कृताध्यापकाः । यदि भवद्भिर्न संगठनं सुदृढं क्रियतेऽथ च स्वस्वस्वार्थवशेन यदि पारस्परिककलहस्यान्तो न भवति तदा ऽस्माकं स्वल्पमपि कल्याणं न भविता । अतः आगम्यताम् सेव्यतां सुरभारतीम् स्वसंगटनं च सुदृढं क्रियताम् ।

— केशव शर्मा

# संस्कृतरंगमञ्च

वामतो द्वितीया संस्कृतरंगमञ्च अभिनेतृ तज्जीवयित्री च श्रमारावस्य यशस्विनी सुपुत्री सुश्री लीला दयाल मुम्बापुरी ।

R. N. 6384/57

Registered No. 10

# क्षमाराव जयन्ती - अवसरे

कल्पनाकाशे विहरन्ती
पण्डिता क्षमा

स्व सख्या सरोजिनी नाइडू
महाभागया सह पण्डिता
वामतो विराजमाना ।

यदा क्षत्रिया: भ्रष्टमार्गा: प्रजाता:
प्रजाशोपणे न्यायदाने च दोना: ।
तदा जामदग्न्योऽवतीर्णोऽत्र देशे
अयं परशुरामश्च न्यायं ररक्ष ।



संस्कृतस्य सचित्र – मासिकम्

शिमला.

अगस्त,

१९८५

भुवि यदा पुनरप्यतिदु:खदा:
समुदिता: परित: खलवृत्तय: ।
अवततार हरि: करुणाकर:
अथ ररक्ष प्रभु: सकला: प्रजा: ॥

# विषयानुक्रमः

| सं० | विषय | | | पृष्ठ |
|---|---|---|---|---|
| १. | परमवीरः यदुनाथ सिंहः | ... श्री मेवारामः | ... | १ |
| २. | को वीणावासवदत्तस्य लेखकः- | — श्री अरविन्द मोहनः | ... | ५ |
| ३. | विवेकानन्दः | — कार्यालयः | ... | १० |
| ४. | प्रतीक्षा | — सम्पादकः | ... | ११ |
| ५. | समाचाराः | — कार्यालयः | ... | १५ |
| ६. | सम्पादकीयम् | ... ... ... | ... | |


## परिचयः


संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, दूरभाष : 3859

प्रधानसम्पादकः— प्रा० केशव शर्मा एम. ए., एम. फिल, साहित्यरत्नम्, „ 8-200

दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-७ (हि.प्र.)

मुद्रकः, प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि.प्र.)

स्वामी :—श्रीमती आचार्य रत्नकुमारी शर्मा

अगस्त १९८५, श्रावण २०४२ — वर्षम्-२९ अङ्कः ११

वार्षिक मूल्यम् २० रु०

# परमवीरः यदुनाथसिंहः

मेवाराम कटारा 'पङ्क'
एम. ए. (संस्कृत) बी. एड
व्याख्याता संस्कृत)

भारतस्योत्तरस्यां दिशि पूर्वाभिमुखो एकः विशालः प्रदेशः। रामकृष्णादीनामवतरणेन, यमुनागङ्गादीनां पावननदीनां पावनपयः प्रवाहेण, मथुरी-अयोध्या-वाराणस्यादिभिर्नगरीभिः, हरितवृक्षपादप-लताभिरावृत्ताभिः पर्वतमालाभिः, विविधःविद्या-केन्द्रैश्च पूते सुशोभिते प्रगतिशीले, द्वापञ्चाशज्जनपदोपेते उन्नततमे प्रदेशे उत्तरप्रदेशे शाहजहांनपुरनाम्नजनपदः राजते। तस्मिन्नेव जनपदे खजूरीनाम्नि ग्रामे षोडशोन-विंशतितमे खीष्टाब्दे नवम्बरमासे द्वादशदिवसे राष्ट्रीयवंशीये राजन्य कुले सामान्यवर्गीयकृषकपरिवारे एकः बालकोऽजायत। पुत्रोपलब्धि-हर्षोद्वेतैः स्वजनैः पण्डितैश्च यदुनाथ सिंहः इत्यभिधान कृतम्। अनन्तरं तन्नाम लोकभाषायाः प्रभावेणापभ्रंशः 'जदुनाथ सिंहः' इत्यभवत।

धन्योऽसौ जनकः यः एवं सुपुत्रं स्वाङ्के विदधात्। माताऽपि साश्लाघ्या यैवमद्भुतसुत प्रसूतवती। धन्याः ते सखायः ये बाल्यकाले तेन सहैव मातृभुवः रजसि उन्मुक्त-क्रीडायाः आनन्दमन्वभवन्। बाल्य काले एव सः प्रभूतंगुणैरुपेतोऽऽसीत्। सः बाल्यकाले एव साहसिकानि कार्याण्येव करोतिस्म। साहसिकेषु कार्येषु तस्य महती रुचिरासीत 'ग्रामेऽग्निकाण्डे तच्छमनाय यदुनाथः प्रथमोऽभविष्यत' लुण्टकानामाक्रमणेऽपि सः सदण्डः तान्नपसारयितुं प्रथम एव तत्स्थले उपतिष्ठति स्म। तस्मिन्नुपस्थिते सति कोऽपि दुर्जन लम्पटः विटः वा किमपि दुर्वृत्तं सम्पादनाय समर्थो नाभवत्। यदुनाथस्योपस्थितौ सर्वेसरलस्वभावाः निष्कपटा निर्व्याजाः अमायाविनश्च ग्राम्याः स्व-सुरक्षामनुभूय सुखेन शेरतेस्म।

यदुनाथ सिंहस्य परिवारस्यान्येऽपि सम्बन्धिनः भारतीय-सेनायां सम्मिलिता। तैरेव प्रेरितोऽयमपि सेनां प्रविष्टः। आरम्भादेव सः राजपुत्र सैन्य दले राजपूतरेजिमेंटे नियुक्तः। तत्रैव सः स्व सैन्यगुणैः सैन्याधिकारिणां हृदयान्याकृष्य यथाकाले द्रुतगत्यैव पदोन्नतिमाप्तवान्। सः नायक एवमल्प काले एव नायक पदमारूढः।

यथोचितं च निर्दिश्य स युद्धरतोऽजायत्, तीव्रतरोऽयमाक्रमणोऽासीत्। महद्घातके युद्धेऽप्यस्माकं वीरभटैः स्व पराक्रमणकौशलञ्च प्रदर्शितम्। अस्मिन् सांग्रामीये युद्धेऽपि शत्रवः पराजिताः, पलायितुं च प्रेरिताः। अस्माकं भटानां गुलिकाभिः असंख्यकाः शत्रुयोद्धारः हताः।

अस्मिन् युद्धे कबाइलिनः एव बहुतराः हता भारतीय-भटानां भीमभुशुण्डिभिः। अस्मत्सैन्य-दलस्याप्यशेषाः सैनिकाः यदुनाथेन सहैवाहता परञ्च त्रिधारस्तु रक्षितः। उभयोराक्रमणयो सूचना तन्त्रीविहीनयन्त्रेण सञ्चारितास्माकं नायकेन यद्वयमधुनापि तिजानुमन् धारयामः। त्रिधारोऽस्माभिश्चिरं सुरक्षितश्च। त्रिधारोऽस्माकमेव भविष्यति चास्माकमेवेति नास्त्यस्मिन् कोऽपि सन्देहः।

स्वकीयाः सैनिकाः तेनादिष्टाः- 'सावहिता भवन्तु एव यतः शत्रुः शान्तिं न समधिगमिष्यति तावद् यावद् न गृहीष्यति प्रतिकारम्। सामर्षैरौ त्रिधाय यः नरः उदासते स सदैव वञ्च्यते विषीदति च। अद्यापि शत्रोः सहस्राधिकाः सैनिकाः अत्रैव परिभ्रमन्ति आक्रान्तुं च तत्पराः लक्ष्यन्ते। पराजयस्य प्रतिशोधनमवश्यमेव ग्रहीतुमेवैषिष्यन्ति। प्राणपर्यन्तं त्रिधारं न दास्यामः प्राणान् दास्यामः न तु त्रिधारम्। कार्यं वा साधयेय देहं वा पातयेयम् इत्यस्माभिः दृढं दृढम्। भवद्भिरप्येवमेव साधयितव्यम्। मृतेषु अस्मासु कोऽप्यन्यः सैन्य विन्यासमिमं रक्षिष्यति नवा परञ्च वयं जीवनपर्यन्तं त्रिधारं न दास्यामः।"

क्षतविक्षतदेहस्य, सुदृढ़ सङ्कल्पस्य, द्विगुणोत्साहपूर्णस्य, रक्ष्य भ्रातु कृतसङ्कल्पस्य बलिवेदिमारोढ़कामस्य स्व नायकस्यैवमाह्वानं शृण्वन्नेवासन तदैव शत्रु-सैन्य-दलोऽस्माकं सैन्य दल मस्याक्रान्तवान्। तृतीयोऽयमाक्रमणोऽऽसीद् भीषणतरः। यथा यथा यवनानामाक्रमणोऽवर्धत तथा तथैव भारतीय-भीम-भटानामप्युद्वेगः वृद्धिमगात्। क्षुधार्त-सिंहैः सदृशाः ते शत्रुष्वापतन्। स्टेन गनैः करक वर्षा-सदृशैः विमुक्त-गुलिकागोलकैः शत्रु-बलः निरुद्धः। अनवरुद्धा गुलिका-वृष्टिः तैरारब्धा। एवं रणविभीषिकां प्रस्फुटन्तीमवलोक्य शृगालैरिव पलायिताः पाक-सैनिकाः।

घावद्भिः शत्रुभिरपि गुलिकाघातः कृतः। तेषां द्वे गुलिके भारत-भुवः सुतस्य परमदेशभक्तस्य, वीरवरस्य, नायक यदुनाथ सिंहस्य वक्षस्थल प्रविष्टे। ताभ्यामाहतः एव निषादशरेणाहतेन यदुनाथेन कृष्णेन सदृशः स यदुनाथ सिंहोऽपि शत्रु-शस्त्रैः हतः शत्रूणां शव-शय्यां मातृभुवोऽङ्कं चिर निद्रामधिशेते स्म। पतन्नेव सोऽपश्यद् यद् भारतीया सैनिकाः तेषां सहायार्थं नौशेरातः त्रिधारमागताः। स्वदेशीयं सैन्य दलमवलोक्य सः विगतचिन्तोऽभवत्। स्वकार्यं भारतेनाप्येश्यः अर्पितमिव। इति स्वदृष्टेन गत चिन्तः विगतसंज्ञ महासत्त्वः भारतभुव बलिवेद्यामात्मानमाहुत्वा समर्पितवान् वा।

तस्यैवं त्यागोत्सर्गञ्चावलोक्य भारतीयराष्ट्रपतीनां सर्वोत्कृष्टेन वीरतायाः

अष्ट चत्वारिंशदुत्तरैकोनविंशति तमेईसाब्दे जनवरी मासस्य षष्टम: दिवस: । भारतपाकयो: परस्परसंगर: समजायत् । प्रवृत्ते घोरसंग्रामे युद्धकालस्य मध्ये एव नायक: यदुनाथसिंह: त्रिधार (तिनधार सैन्याधारे नियुक्त तत्र प्राप्य निवसन्तेव च शत्रुभिस्त्रातुमादिष्ट: । कार्यमिदं सम्पादनाय तस्मै नवसैनिका: प्रदत्ता: । अस्मादघटनात्पूर्वमयं भङ्गर: एक: भारतीय: ग्राम. एवासीत् परञ्च किञ्चित् कालात्पूर्वमेवायं ग्राम. पाकिस्थानेनाधिकृत: । पाकसेनाया: प्रमुख सम्मेलन: भङ्गरे ग्रामे एवासीत् पाकसैन्याधिकारिणोऽत्रैव सगता: भारतं प्रति आक्रमणस्यायोजना समायोजयन्ति स्म ।

त्रिधार: सैन्याधारोऽप्यासीदत्यन्तमहत्वपूर्ण: । संग्रामाग्रे य नौशेरादत्यं भारतीयं प्रमुखसैन्यकेन्द्रं भङ्गरग्राम चान्तरा स्थित: । पतिते त्रिधारे नौशेरां प्रत्याक्रमणं सम्भवितुमशक्नोत । नायक: यदुनाथ सिंहोऽदेव तस्य त्रिधारस्य सुरक्षा-भार स्वीकृत्य स्वमस्तकं चोद्धवा नवसंख्यकै सैनिकै सहैव जागृत प्रहरीव दृढ़ो भूत्वा तत्रैव स्थित: ।

नियुक्तिदिवसे एव ते कवाइलिभिराक्रान्ता: । एतत्कालस्यायं वहत्तम: महाभीषणश्च युद्धोऽजायत् । पञ्चसहस्रसंख्यका कवाइलिन: सैनिका: अल्पसंख्यकेषु भारतीयभटेष्वभिद्रवन । शत्रूणामेवं विशालवलमवलोक्य यदनाथसिंहेन न तु सुरक्षोपाय एव चिन्तित: न च पलायनस्योपाय अन्विष्ट वृत्तावुभावस्मस्य नोचितौ लक्ष्यते, इति तस्य मतिरासीत । स जानातिस्म यत त्रिधारे पाकेनाधिकृते भङ्गरस्य पुनराप्तिरसम्भवा शक्यते पाकसैनिकै: इति विमृश्य स: स्वकीयान् सैनिकानाहूय-भो सैनिका' यावज्जीवितं वयमत्रैव स्थित्वाकर्मिष्ठा दृढ़सङ्कल्पा: शत्रुविनाश करिष्याम: योधार: ? कार्यं वा साधयेथ देह वा पातयेषमिति निश्चित्य भवन्तु: स्थेयम । इत्यादिष्टवान् ।

तत्क्षणे एव भीषण: संगर: समजायत् । नायक यदुनाथ सिंहेन तस्य सैनिकैश्चारिगुलिकावृष्टिमध्ये एव गुलिकागोलकानां च वृष्टिरारब्धा । ईश: तस्यैव साहाय्यं परोति य: स्वस्य साहाय्य स्वयमेव विदधाति । आलस्यैव सख्याय देवा: । कार्याण्युद्यमेनैव सिध्यन्ति । उद्योगिनं सिंहमेवोपैति लक्ष्मी भयङ्कर: सग्राम: समवर्तत यदुनाथ सिंह: तस्य सैनिकाश्चैव, युद्धमकार्षु यच्छतसंख्यका: अपि पाकसैनिका. मुहूर्तमेव मृत्युमुख प्रविष्टा: । अन्ये च पलायिता: । यावन्तोऽपि शत्रुभिर्हताः भारतीय सैनिका: साफल्यं लब्धवन्त. रक्षापङ्क्ती च सुदृढ़ा: अतिष्ठन् ।

गुलिकावृष्ट्यावसाने यदुनाथ सिंहोऽपश्यत्तस्य नवसु सैनिकेषु चत्वारोऽऽहता: भुवि शेरत स्म । प्राथमिकोपचार कृत्वा ते सैन्यविन्यासे स्थापिता शत्रव एवमुत्सर्गमप्यवलोक्य युद्ध-विरता: न भविष्यन्ति ते ऽवश्यमेवाक्रमिष्यन्तीति तै: ज्ञातम् । यदुनाथस्यानुमान सत्यमासीत । तथैवाजायत यथा सोऽचिन्तयत् क्षणे एवाक्रान्ता: प्रत्यावर्तन् । नायक सोमनाथेन स्व- छिन्न- भिन्न: सैन्यदल: पुनरपि सङ्गठित: ।

परमवीरचक्रेणालङ्कृत: एवं राष्ट्रस्य श्रद्धाञ्जलिं तस्मै समर्पितवान्। इथं स: सेनगणां. यदुनाथ सिंहं प्रति समादर प्रकटो चकार

एवं स: धीर-धौरेय:, वीरवरेण्य:, कर्मवीर ,रणकुशल: यदुनाथ सिंह! स्वदेश-सुरक्षा-संग्रामस्येतिहासे स्व-सुप्रशस्य स्थान धत्ते । यत:–

यदुनाथ: महायोद्धा, राष्ट्रौढ बंश सम्भव: ।
हन्त ! दिवंगतोऽद्यासौ तिनधारञ्च रक्षयन् ।।
पिता तु कृषिकार्येण' रणकार्येण चात्मज: ।
मातृ - भूमे: समुद्धारम्:, कृतवन्तावुभावपि ।।
परमार्थैकधियश्च, स्वत्राणाय गतस्पृहा: ।
लोक हिताय चायान्ति, जगति केऽपि मानवा: ।।
नास्तीह साम्प्रतं यदो:, भौतिक पिण्ड यद्यपि ।
किन्तु यश: शरीरेण, सोऽद्यापि भुवि विद्यते ।।
अद्यास्ति स्थास्यति च, यश: कायेन वीर स: ।
जरा-मृत्यु-भयं, नास्ति यश: कायेन जीवति ।।

— ७-३३३, छीटम टोला
बयाना–३२१४०१

—

# निवेदनम्

ग्राहक महानुभावों से प्रार्थना है कि जिन्होंने जनवरी १९८५ से दिसम्बर १९८५ तक का शुल्क नहीं भेजा वे कृपया भेजने की व्यवस्था करें एवं अक्तूबर १९८४ से सितम्बर १९८४ तक का शुल्क भी अनेकों ग्राहकों का अभी तक नहीं आया कृपया वे भी शुल्क २० रु. शीघ्रातिशीघ्र भेजने की कृपा करेंगे ।

— सम्पादक

———

# को वीणावासवदत्तस्य लेखकः

अरविन्द मोहनः

एम. ए. एम. फिल

संस्कृत-साहित्य विश्वस्य बहुप्राचीनं साहित्यं अस्ति। इह हि अनेकानि ग्रन्थ-रत्नानि ईदृशानि विलसन्ति येषां लेखकस्य वा कालस्य वा निश्चितार्थः परिचयो न मिलति। वीणावासवदत्तं अपि अस्य अपवादः नास्ति। इदं कस्य कवेः लेखनीप्रसूतं मौक्तिकं अस्ति इत्यस्मिन् विषये विद्वांसः एकं मतं न धारयन्ति। नाटकस्य पञ्चपाण्डुलिपयः उपलब्धाः विराजन्ते परन्तु यत्रापि कुत्रापि तत्रापि वा लेखकस्य विषये कोऽपि संकेतः न। प्रस्तुत-नाटकस्य संक्षिप्ता स्थापना अपि अस्मिन् विषये सर्वथा मौनं आकलयति। अतः गवेषणा परायणैः विपश्चिद्भिः स्व-स्व प्रतिभा-बलेन अस्य लेखकस्य विषये अनेके तर्काः अनुमानविषयीकृताः येषां समर्थने तैः तैः मान्यैः विज्ञैः विविधाः युक्तयः अपि प्रस्तूयन्ते। तेषां विभिन्नैः तर्क-वितर्कैः अयं प्रश्नः अत्यन्तं जटिलः जातः। फलतः वीणावासवदत्तस्य रचयितुः विषये निश्चितमत-निर्धारणं बहुकठिनं अजायत। अनेकासां मान्यतानां आधारेण प्रस्तुत-विषये निम्नलिखितानि त्रीणि मतानि सम्मुखं आयान्ति। तथाहि :—

(क) वीणावासवदत्तस्य भासो लेखकः ?

(ख) वीणावासवदत्तस्य शूद्रको लेखकः ?

(ग) वीणावासवदत्तस्य शक्तिभद्रो लेखकः ?

## (क) वीणावासवदत्तस्य शक्तिभद्रो लेखकः ?

डा० सी० कुन्हन राजा प्रस्तुत नाटकस्य भासं लेखकं मनुते तस्य तर्कोक्तिः अस्ति यत् भासस्य अन्यैः नाटकैः सह वीणावासवदत्तं निम्न स्थानेषु साम्यं धारयति—

प्रस्तुत नाटकस्य निम्नश्लोकस्य—

विष्णोर्जयत्यरुणताम्रतलः स पादो,
यः प्रोज्झितः सललितं त्रिजगत् प्रमातुम् ।

क्वापि प्रविष्टरुचिराङ्गुलिरावभासे,
वैडूर्यसङ्क्रम इवाम्बर सागरस्य ।।

भास विरचितस्य मध्यमव्यायोगस्य च निम्नलिखित श्लोकस्य—
पायात्स वोऽसुरवधूहृदयावसादः.
पादो हरेः कुवलयामलखड्गनीलः ।
यः प्रोदयत्त्रिभुवन—क्रमणे रराज,
वैदूर्यसंक्रम इवाम्बरसागरस्य ।।

चतुर्थपंक्तौ शब्दसाम्य पदसाम्यं वा नयनमार्गं अवतरति । अनेन प्रकारेण वीणावासवदत्तस्य निम्नश्लोकस्य —
चतुरुदधिजलाम्बरां वरां,
फलभरपिंजरशालिमालिनीम् ।
चिरमस्तु नृपो हताहितां,
हिमगिरिविन्ध्यपयोधरां धराम् ।।

भासविरचित स्वप्नवासवदत्तस्य निम्नलिखित भरतवाक्ये—
इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ।।
भावसाम्यं अस्ति ।

भासस्य स्वप्नवासवदत्ते राज्ञः उदयनस्य प्रस्तुत उक्तौ—
बहुशोऽप्युपदेशेषु यया मामीक्षमाणया ।
हस्तेन स्रस्तकोणेन कृतमाकाशवादितम् ।।

वीणावासवदत्तस्य काञ्चनमालायाः निम्नशब्दैः समानता अस्ति—'उपदेशकाले यद भर्तारं प्रेक्ष्य संजातविहस्ततया घोषवतीम् उज्झित्वा आकाशो वादयते ।'

अस्य नाटकस्य प्रारम्भो भास नाटकानां इव 'नान्द्यन्ते ततः प्रविशति सूत्रधारः' इति वचोभिः भवति ।

वीणावासवदत्ते भासनाटकेषु इव 'प्रस्तावनायाः' स्थाने 'स्थापना' शब्दस्य प्रयोग कृतः अस्ति ।

भासविरचित—प्रतिज्ञायौगन्धरायणस्य कथावस्तुना उक्त-नाटकस्य कथावस्तु बहुशः समतां धारयति ।

परन्तु डा. सी. कुन्हन राजा द्वारा प्रतिपादितं शब्द-भावसाम्यं वीणावासवदत्तस्य भास लेखकत्वे पर्याप्तं प्रमाणं न भवितुं शक्नोति । यतः यः कोऽपि नाटककारः स्व पूर्ववर्तिनां कवीनां कृतिभिः प्रभावितो भवितुं अर्हति ।

इत्थमेव डा. के. वी. शर्मणा यासां समानतानां आधारेण प्रस्तुतं नाटकं भासं-विरचितं मानयितुं प्रयासः कृतः अस्ति ताः उक्त-नाटकस्य भास कर्तृत्वे अपर्याप्ताः सन्ति तत्र निम्न लिखिताः तर्काः प्रस्तोतुं शक्यन्ते—

'नान्द्यन्ते ततः प्रविशति सूत्रधारः' वाक्येन प्रस्तुतनाटकस्य प्रारम्भः 'प्रस्तावना' स्थाने 'स्थापना' शब्दप्रयोगः चेत्यादि पूर्ववर्तिनीनां कृतीनां अनुकृतिमात्रम् ।

भासः उदयन-कथा सम्बन्धिनी स्वप्नवासवदत्तं प्रतिज्ञायौगन्धरायणं च इति द्वे नाटके रचितवान् प्रतिज्ञायौगन्धरायणस्य कथावस्तु वीणावासवदत्त कथावस्तुना समानतां भजते । अतः इद उचित न प्रतीयते यत भासेन एकमेव कथावस्तु आधार कृत्वा द्वयोः नाटकयोः रचना कृता स्यात् यदि तस्मै अनया कथया सम्बद्धस्य अन्य नाटकस्य रचना कर्तुं इष्टा स्यात् तदा स उदयनस्य जीवनेन सम्बद्ध यत् किञ्चित् घटनान्तर कर्तुं इच्छेत ।

एतद अतिरिक्तं त्रिवेन्द्रम उपलब्धे भासनाटकचक्रे भासनाम्ना अस्य नाटकस्य कुत्रापि उल्लेखः नास्ति । तत अनेन प्रकारेण इदमेव प्रतिपादितुं अधिकतर्कसंगत अस्ति यत् इदः नाटकं भासविरचित न कि तु तेन प्रभावितं अवश्यम् ।

## (ख) वीणावासवदत्तस्य शूद्रको लेखकः ?

प्रस्तुत नाटक शूद्रक विरचितं इति मत आश्रितेषु विद्वत्सु ए० आर० सरस्वती, एम० आर० कविश्च प्रमुखौ स्तः एतौ विद्वांसौ स्व मत पुष्टि निम्नलिखितैः तर्कैः साधयतः । वल्लभदेवः स्वसुभाषितावल्यां वीणावासवदत्तस्य प्रथमं श्लोकं उद्धरति तत् च शूद्रकविरचितं मनुते अतः इदं नाटकं शूद्रकस्य रचनेति ।

मृच्छकटिक वीणावासवदत्तयोः अनेकेषु स्थानेषु भावसाम्य आधारेण अपि एतौ विज्ञौ एनत् शूद्रक-रचनां घोषयतः । तद् अनुसारेण उभयोः अपि नाटकयोः अधः उद्धृताः समानताः सन्ति ।

मृच्छकटिके 'रत्नं हि रत्नेन संगच्छते' इति पद भावः उक्त नाटकस्य चतुर्थे सप्तमे च अङ्के 'रत्नमेव हि रत्नं भजते इति अस्यां उक्तौ स्पष्टं संगृहीतः अस्ति ।

मृच्छकटिके चारुदत्तस्य निम्नलिखिताः वाचः 'रूक्षस्वर वासति वायसोऽयम्' 'शुष्कवृक्षस्थितोऽवाङ्क्ष' आदित्याभिमुखस्तथा' इति च । वीणावासवदत्तस्य औपगायकस्य निम्न उक्तया सह 'प्रतिसूर्यंकण्टकवृक्षे वायसः कूजति' भावसाम्यं आकलयन्ति ।

मृच्छकटिके 'हंसो परित्यज्य वायसं समुपस्थित' इति विटवचनं वीणावासवदत्तस्य अष्टम अंके काञ्चनमालायाः । 'किं राजहंसः काकीं कामयते' इति वचनेन साम्यं धारयति ।

शूद्रकः मृच्छकटिके चारुदत्तस्य व्यक्तित्वं उदयनस्य शब्दैः —

दीनानां कल्पवृक्षः स्वगुणफलनतः सज्जनानां कुटुम्बी,
  आदर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः ।
सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्वो,
  ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये ॥

वीणावासवदत्ते यौगन्धरायणस्य व्यक्तित्वं उदयनस्य शब्दैः इत्थं व्यक्तं करोति—

खड्गो रक्षाविधाने रविरतितिमिरे कार्यभारेषु धुर्यः,
  दीपो मन्त्रान्धकारे सुरगुरुविनये संक्रमोऽप्यापदोघे ।
उत्कण्ठायां समाजो गतिरनवसरे चन्दनं शोकतापे,
  सक्षेत्राम्मानुपाभो हृतसुखशिवदो दिव्यचिन्तामणिर्मे ॥

एतासां समानतानां आधारेणापि प्रस्तुतनाटकस्य लेखकः शूद्रकः इति युक्ति-संगतं न प्रतीयते । अतः केवल साम्यस्य कारणं मत्वा इदं नाटकं शूद्रकस्य रचना भवितुं नार्हति ।

एतदतिरिक्तं मृच्छकटिके यादृश सामाजिकराजनीतिक अवस्था वर्णनं कृतं अस्ति वीणावासवदत्ते तादृशी अवस्था चित्रिता नास्ति ।

चतुर्भाणी सम्पादकाः अपि प्रस्तुतं रूपकं शूद्रकविरचितं प्रमाणयितुं प्रयासं तु कृतवन्तः परन्तु निजमत पोषयितुं ते कापि युक्तिः न प्रदत्ता । अतः युक्तीनां अभावे सम्पादकानां कथनमात्र प्रमाणिकं स्वीकर्तुं न शक्यते ।

अन्ततः निष्कर्षः अयमेव आयाति यत् वीणावासवदत्तं शूद्रविरचितं अपि नास्ति ।

## (ग) वीणावासवदत्तस्य शक्तिभद्रो लेखकः ?

येषां विदुषां मतानुसारेण इयं शक्तिभद्रस्य रचना तेषां अस्मिन् विषये-तर्कः अस्ति यत् शक्तिभद्रः स्वविरचितस्य नाटकस्य आश्चर्यचूडामणिः प्रस्तावनायां उल्लेखं अकरोत् यत् मदीया एका अन्या कृतिः 'उन्मादवासवदत्त'– नाम्नी अपि अस्ति । डा० ए० डी० पुसालकरः वीणावासवदत्त एवं उन्मादवासवदत्तं इति नामान्तरेण स्वीकरोति इदं तर्कं आश्रित्य एव स प्रस्तुत नाटकं शक्तिभद्रस्य रचनां मनुते ।

प्रस्तुतनाटकं शक्तिभद्रस्य रचनां स्वीकुर्वता विपश्चिता पार्श्वे किम् अपि पुष्टं प्रमाणं नास्ति। किञ्च, उक्तनाटकस्य 'उन्मादवासवदत्त' इत्यस्य स्थाने वीणावासवदत्तं इति एव स्वीकार्यं अस्ति यत् उन्मादवासवदत्तं इति नाम केवलं प्रथम तृतीय अंकयोः आधारेण एवं यत्र यौगन्धरायणस्य उन्मत्तवेषे उज्जयिनीगमनस्य घटना प्रमुखा अस्ति। परन्तु भाविषु पञ्चसु अंकेषु वीणाया महत्त्वं उत्तरोत्तरं वर्धते। अतः अस्य नाम 'उन्मादवासवदत्तं न अपितु वीणावासवदत्तं इति एव अस्ति। तद् इत्थं उक्तंमतं खण्डितं भवति। अतः इयं रचना शक्तिभद्रस्य अपि नास्ति।

अनेन प्रकारेण पूर्वोक्तानि सर्वाणि मतानि वीणावासवदत्तस्य लेखकत्वे निश्चयात्मक प्रमाणँ दातुं असमर्थानि। फलतः इदं नाटकं अज्ञातनाम्नः कस्यचिद् लेखकस्य कृतिः इति मानयितुं शक्नुमः।

नई बस्ती सिनेमा रोड,

नाभा

## पञ्जाबप्रदेशे संस्कृतमहाविद्यालयारम्भो भविता

पञ्जाबप्रदेशस्य शिक्षा विभागाध्यक्षेण गतमासे एकस्यां गोष्ठ्यां भाषयता उक्तं यदस्मिन् प्रदेशे राज्यप्रशासनेन संस्कृत कालेज निर्माणस्य शीघ्रमेव प्रयासः करिष्यते। प्राध्यापकानाञ्च कृते शिक्षणस्य विशिष्ट दिशानिर्देशः करिष्यते।

## हरियाणायां संस्कृतपाण्डुलिपिविज्ञानसंगोष्ठी भविष्यति

कुरुक्षेत्रे विश्वविद्यालयान्तर्गतसंस्कृतानुसन्धानसंस्थानस्याध्यक्षेण डा० गोपिकामोहनेन सूचयते यत् १६ अगस्ततः २१ अगस्तपर्यन्तं इयं संगोष्ठी भविता। अस्मिन् विभिन्नविश्वविद्यालयेभ्यः ३० संख्यकाःविद्वांसः भागं ग्रहिष्यन्ति। विश्वविद्यालयानुदान-आयोगस्यार्थिकसाहाय्येनेदं सम्पत्स्यते।

———

# विवेकानन्दः

अहो इयं प्राकृत्यसुषमा, नभोनीलिमा, उषायाः स्वर्णिमा, स्रोतसां कल कल निनादः, हिमाच्छादितपर्वतानां महिमा, पूर्ण चन्द्रस्य धवलिमा, पुष्पपरागस्य पीतिमा च । किम् अस्ति अस्मादपि अधिक सौन्दर्यं क्वचित् ? इति चिन्तयन् पितामहः प्रोवाच स्मृतम् कियत् सौन्दर्यम् आसीत् । उषाः— तात पितामह ? स्वप्नमेव पश्यत किं प्रलपसि ! समाधिस्थं नाटयन् पितामहः अकथयत् । भारतगौरवं, विश्वसौन्दर्यं स्मरामि । पुत्रि ? न: जानासि एतत् विश्वनाथ दत्तस्य गृहे १२ जनवरी १८५३ दिने उत्पद्यमानः बालकः पाश्चात्यसंसाराय भारतीयतत्त्वज्ञानस्य उपदेष्टा महान् विश्वगुरुः भविष्यति । १८८४ मिते ऽब्दे पितुः मरणानन्तर परिवारस्य भरणपोषणस्य भारः अपि एतस्मिन्नेव आपतितः । निर्धनपरिवारः, कुशलं नासीत् अतः तस्य बालस्य विवाहः न अभवत् । दुर्बलायाम् आर्थिक स्थितौ स्वयं बुभुक्षितः अपि अतिथिसत्कारस्य गौरवगाथा तस्य जीवनस्य उज्ज्वलः अध्यायः अस्ति । बालकस्य प्रतिभा अपूर्वा आसीत् । तेन बाल्ये एव दर्शनानां अध्ययनं कृतम् । गुरुणा तस्य जीवनम् ज्ञानेन प्रकाशितं कृतम् । पञ्चविंशतिवर्षाणाम् अवस्थायां स गृहं तत्याज । पदातिना एव तेन समस्त भारतस्य यात्रा कृता । १८९३ मिते वत्सरे शिकागो, स्थाने एका विश्वधर्मसभा अभवत् । तत्र भारतीयप्रतिनिधिरूपेण स प्राप्तः । सभायां तस्य प्रवेशः न भवेत् एतदर्थं पाश्चात्यैः समधिकः प्रयत्नः कृतः । भवतु, पराधीनभारतं कः संदेशं दास्यति ? यूरोपीयवर्गः भारतस्य नामतःऽपि घृणां करोति स्म । कथञ्चित् समयः प्राप्तः ११ सितम्बर १८९३ दिने तस्य अलौकिक सौन्दर्येण तत्त्वज्ञानेन च पाश्चात्य जगत् आश्चर्यं निपातितम् । तस्य एव व्यक्तित्वम् आसीत् येन भारत गौरवस्य विदेशेषु प्रकाशः कृतः । अध्यात्मविद्यया, भारतीयधर्मेण तथा दर्शनैः विना विश्वं अनाथं भविष्यति । स्वामी विवेकानन्दस्य अयं दृढ विश्वासः आसीत् । संसारः यत्समक्षं नतमस्तकः अभूत् । सः कथयति स्म 'अहं' कश्चित् तत्त्ववेत्ता न अस्मि । न चाहं सन्तः अथवा दार्शनिकः एव अस्मि । अहं तु दरिद्रः अस्मि दरिद्राणाम् च अनन्य भक्तः अस्मि । ४ जुलाई सन् १९०२ दिने स महात्मा पार्थिवं देहं तत्याज । परन्तु स स्वामी विवेकानन्दस्तु भारतीय हृदये अमरः अस्ति । धन्यः तस्य गुरुः परमहंस रामकृष्णः तथा सोऽपि धन्यः यः एतावान् महान् आसीत् ।

———

# प्रतीक्षा

प्रो. केशव शर्मा

प्रातः कालीन सूर्यस्य रश्मयः समस्तविश्वोपरि स्वर्णधूलिं विकरन्तिस्म। दिनेशः उद्यानस्य कोणानुकोणं परिभ्रमन् मुहुर्मुहुः स्वमणिबन्धे संलग्नां स्वर्णघटिकां पश्यन् अतीतस्मृतिषु विलीनोऽभवत्। वाराणसीयं विश्वसंगीत-सम्मेलनं नातीदूरमासीत् यदा तेन सुषमायै लिखितम्—'यद्यपि मया सर्वात्मना मयोगं संगीताभ्यासमकारि तथाप्यहं यदा स्वगीतगायनकल्पनां करोमि भाविनि संगीतसम्मेलने तदा भयेन कण्ठावरोध एव सम्भवति। यदि सत्यमेव तस्मिन्नपि काले एवमेवाभविष्यत्तदाहं त्वां कदाचिदपि द्रष्टुं न शक्ष्यामि।" सुषमया एतत् तदीयं पत्रं यथाकालं उत्तरितमासीत्। तस्मिन् तया लिखितम् "—...भवत कण्ठावरोधो भवति...सत्यं त्विदमस्ति यत् सर्वेषामेव गायकानां कण्ठावरोध सञ्जायते। महान्तः प्रसिद्धाः सिद्धाश्चापि गायका अस्मात् कण्ठावरोधभयात् मुक्ता न भवन्ति। अतः अहं ब्रवीमि यत् यदैव तस्मिन् सम्मेलनेऽनेन कण्ठावरोधभयेनाकुलो भवेत् भवान् तदा स्वकर्णाभ्यां मदीया एषा वाणी श्रोतव्याः— "यद्यप्यहं कण्ठावरोधभयेन स्वगाणार शुद्ध-संलापभयेन च स्वकीयात् स्वगान् साधयितुमसमर्थोऽस्मि, तथापि भयस्य नास्ति कारणं किमपि. यतोऽहं हस्ते स्फाटिकमालिकां विदधती श्वेतवसना माता वाग्देवतैव स्वयं धवलहंसाधिष्ठिता वीणां वादयन्ती विविधान् रागसमूहान् आलपन्ती मम शिरसि संस्थापितस्ववरदशरदम्भोजकरा सम्मुखे विराजते। एवं कारणेनावश्यं विजयिनो भविष्यन्ति श्रीमन्तः, नात्र संशयलेशोऽपि।"

मित्राणां शुभकामनाः सत्यमेवातिशयबलशालिन्यो भवन्तीति सर्वविदितम्। दिनेशस्तु वास्तविकरूपेण तस्या एवानवलोकितपूर्वाया अपरिचितायाः बालाया वाग्बलेनैव पत्रेण च तस्मिन् महति संगीतसम्मेलने विजयं प्राप्य स्वयशोवितानं सर्वत्र प्रसारयामास।

अद्य तस्य हर्षोऽसीमित एवासीत। भवेत् कथं न अधुना किञ्चित् कालानन्तरमेवासौ तस्या वास्तविकां वाणीं श्रोष्यति। अष्टवादनार्थं कानिचिदेव क्षणानि अवशिष्टान्यासन्। दिनेशः समधिकां समुत्सुकतां भेजे। दिनेशो यद्यपि प्रकृतिसुन्दरः आसीत् तथाप्यद्य न जाने कथं तस्य व्यक्तित्वमधिकप्रभाववान् प्रतीयतेस्म। दिनेशेनाद्य स्वल्पपीतवर्णस्य कञ्चुकं, हिमवत्–धवलः पादायामः, कृष्णवर्णस्य च जाकेटः धारितः आसीत्। अंगुल्यां च मरकतमणिमयमंगुलीयकमासीत्।

इदानीं—उद्याने प्रायेण जनसम्मर्दः सम्पन्नोऽभूत् । बहवो लोकाः परितः परिभ्रमन्तः आसन् । एकाऽतिसुन्दरी बाला दिनेशस्य सम्मुखात् निगता । दिनेशः प्रबुद्धः । क्वाचिदियमेव नु नास्ति सा ? अनया हि बालिकया स्वकीये कोटे रक्तपुष्पमपि धारितमासीत् परमिद कुसुमं शतपत्र्या लघीयसी कलिका मासीत् । तस्यां तु शतपत्र्याः कलिकाया एव सङ्केतः निर्धारितः—आसीत् । पुनश्चेय नवयुवतिरेवासीत् । अनुमानतोऽष्टादशवर्षदेशीया सुषमया तु स्वीयः आयुषोऽनुमान त्रिंशद्वर्षीयेति; लिखितम् यदा किल तद्भावुकता सांकृष्टा दिनेशः सन्नपि पञ्चविंशतिवर्षदेशीयः द्वात्रिंशत्-वर्षीयमात्मानमलिखत्तस्यै।

अधुना सा पुस्तिका तस्य स्मृतिपथं समायाता या किल उभयोरेव तयोर्मिथः पत्रव्यवहारकारणमासीत् । यदाऽसौ नैषु दिवसेषु स कालिकातायां स्वतन्त्ररूपेण संगीताभ्यासं कुर्वन् आस्ते तु प्रतिदिनमभ्यासार्थं तत्रत्योद्याने प्रकृतेर्मुक्तवातावरणे गच्छतिस्म । तस्योद्यानस्य एकान्तभागे न जाने एका युवतिः कुत्र स्थिता कदा तस्य कर्णमधुरं संगीतसुरं पायं पायं तृप्तिं न लभते स्म । एष्वेव दिवसेषु स संगीतस्य विशिष्टाभ्यासार्थं वाराणसीगमननिश्चयमकरोत् । स्वप्रस्थानस्य पूर्वदिने नित्यवदसौ उद्यानेऽभ्यासार्थं जगाम । स्वकीयमभ्यासं समाप्य यदा तेन स्वकीये चक्षुषी समुद्घाटिते पुरतः सपुस्तकमेकं पतितमलोकयत् । सो हि स्वकीयं तानपूरमेकतः संस्थाप्य पुस्तकं स्वकरेणोत्थापयामास । अहो किमिति 'संगीतसौरभम्' कुत इदम् कस्मादिदमिति क्षणं चकितो बभूव । अथ यदा तेन तस्य पुस्तकस्य कानिचित् पत्राणि परिवर्तितानि तदा एकस्मिन् स्थाने तस्य दृष्टिः सहसा स्थिताऽभूत् तत्र कस्यापि बालायाः संकेतः लिखित आसीत् । इतः पूर्वं स कदाचिदपि एव न कल्पयामास यत् कामिनी कमपि पुरुष प्रति एवंविधां समनुभूतिं धारयति ।

दिनेशः वाराणसीमागत्य तस्यै एकं पत्रं—अलिखत् । तयापि तस्योत्तरं दत्तम् । दिनेशः स्वकीयं संगीताभ्यास सम्यक् प्रवर्धयामास । यतोहि वर्षद्वयानन्तर तत्र एक विश्वसंगीतसम्मेलनं भविष्यतीति प्रथमपुरस्कारप्राप्त्यर्थं तथा स्वयशोधवलिमानं सर्वत्र प्रसारणार्थं यशःशरीरेण चात्मानं अमरं कर्तुं एतत् परमावश्यकमासीत् । एवं व्यस्तेऽपि तस्य जीवने तयोः पत्रव्यवहारः संचलन् एव अतिष्ठत् । यदि कदाचित् दिनेशः पत्रं नापि अलिखत् साहि निरन्तरं यथाकाल स्वकीयं कोमलकराङ्कितं दलमवश्यमेव प्रहिणोति स्म । अनेन च दिनेशः कामपि अनिर्वचनीयां प्रेरणां संगीतसाफल्यञ्च प्राप्नोत् । तेनानुभूतम्—यथा स सुषमामभिकाङ्क्षति तथा साऽपि तमिति ।

किन्तु यदा यदा स तस्याः चित्रं अयाचत तदा सा तत्-अनङ्गीकृत्य स्वीयामस्वीकृतिं ददाति । दिनेशः अनेन तस्या व्यवहारेण दुःखमनुभवति ।

'एकस्मिन् दिवसे सुषमया लिखितम् "यदि मां प्रति भवदीयासु भावनासु काचित् सत्यता वर्तते, वास्तविकता चास्ति, तु मदीयरूपरंगेण न तत्र किमप्यन्तरमायाति । यद्यह हि सुन्दरी अस्मि तर्हि मदीये मानसेऽयमेव विचारः

स्थानं करिष्यति यत् भवान् एतदर्थमेव मया पत्रव्यवहारं करोति। न केवलम् किल सौन्दर्यासक्तिं प्रेम मां–अणुरपि रोचते। यदि चाहं कुरूपास्मि, अस्यैव च किञ्चित्सम्भावनापि करणीया श्रीमत:, तदाहमनुभविष्यामि यत् मम चित्रावलोकनानन्तरमपि भवान् एतदर्थमेव मां पत्रं लिखति येन एकाकित्वं न बाधेत अन्यथा पत्रलेखनं न भवति भवत् पक्षेण। अत एवाहं स्वीयं चित्रं नैव प्रेषयिष्यामि भवतोऽपि च नातोऽग्रे चित्रार्थं लेख्यम्। यदा भवान् प्रतिनिवृत्याऽत्र आगमिष्यति तदा मां–अवलोकयिष्यति एव। तदैव च यथेच्छं सर्वं निर्णेतव्यम्। तदनन्तरमेवावां स्वकीयं पारस्परिकं सम्पर्कं सुसंस्थापयितुं समुन्मूलयितुञ्च स्वतन्त्रौ भविष्याव:।"

अवादनाय केवलं क्षणद्वयमवशिष्टमासीत्। दिनेश: सूर्यसयमं कुर्वाण: तस्मिन् स्थाने स्थित: आसीत्। तस्य हृदयगति: अत्यन्त तीव्राऽभूत्। परित: पुष्पाणि विकसितान्यासन्। स्रोतांसि च कलकल शब्दं कुर्वन्तिस्म। पक्षिण: मधुरं गायन्तिस्म। तरुषु शस्येषु, पुष्पेषु, लतासु च प्रकीर्णा: तुषारबिन्दव: मौक्तिकमयं जगत् इति प्रवञ्चयन्तिस्म दर्शकान् भावुकान्। दिनेशो न जाने किं भावयतिस्म।

तदैव एका नवयुवति: मुग्धा नायिका इव तं प्रति आगच्छन्ती आसीत्। तस्या: शरीरं किञ्चित् नम्रं सुदृढानि चाङ्गान्यासन्। तस्या: कृष्णा: कुण्डलमयालका: कर्णकपोलावलम्बिन आसन्। तस्या लोचने कमलायते मीनचपले मदिरमये चास्ताम्। अधरेऽपि तस्या: कुसुमकलिका-कोमले वर्ततेस्म। पीतां शाटिकां परिधाय सा वासन्तीव लगतिस्म।

दिनेश: अवलोक्य एव तां प्रति प्राप्तोऽभूत्। स किल परवानेव सम्वृत्त: तस्य सौन्दर्यं सुरां निपीय यद नया नैव धारिता शतपत्रिकाया: कलिका तं स्वनिकषा आगच्छन्त समालोक्य सा ननु सस्मित स्वबक्राधरेण शरेण तं विद्धं चक्रे। दिनेश: स्वकीयां स्थितिमेव विस्मृत्य तस्या: सुसामीप्यमागच्छन्। तत्क्षणमेव स सुषमामक्षिलक्षीचकार। कल्पिता सुषमा तस्या नवोढाया: पृष्ठभागे एव स्थिता आसीत्। अवस्थया सा उल्लंघितचत्वारिंशत्वर्षाणीव प्रतीयतेस्म। केशराशि: श्वेतिमानं भजतेस्म। सा स्थूला अप्यधिका आसीत् तस्या: स्थूलयो: विशालचरणयो: उच्चौ उपानहौ राजेते स्म। एकवारं दिनेश: चिन्तयामास यदियं सुशीला न भवेत् किन्तु तस्या कोटस्य कालरोपरि एका शतपत्र्या लघीयसी विकासोन्मुखी कलिका संलग्ना आसीत्।

पीतशाटिकावती नवयुवति: तीव्रगत्या गच्छति स्म। चलन्ती सा दिनेशं स्वानुगमनार्थं सङ्केतमपि कृतवती।

दिनेश: क्रकचेन विदीर्यमाणमात्मानमनुभूतवान् सो हां चकत अनुगन्तुं तां पीतशाटिकावतीं वसन्तप्रतिमाम्। परं तेन तयाऽप्यवश्यं मिलितव्यं या तस्मै

धैर्यं दत्तवती तस्मिन् काले यदा तस्य जीवनमरणयोः प्रश्नः आसीत् । अधुना सैव समक्षेऽस्ति । तस्या आपातगोलाकारेण सौजन्यता तथा बुद्धिमत्ता प्रत्यक्ष भासिताऽभवताम् । तस्या लोचनयोः सहानुभूतिसागरः आसीत् ।

दिनेशः 'संगीतसौरभम्'' इति नाम्नीं, पुराणीं, लघ्वीं, नीलवर्णावरणमयीं पुस्तिकां स्वहस्ताभ्यां दृढं धृतवान् । इमां पुस्तिकाम्-अवलोक्य एव सा तं ज्ञास्यति । स मनसि एवं चिन्तयन्नेवासीत्-यत् इदं प्रेम तु नास्ति, पर प्रेम्णः अपि-अधिकं मूल्यवत तथा दुष्प्राप्यं वस्तु भविष्यति.एका एतादृशी मैत्री, यत् कृते असौ अद्यावधि कृतज्ञः आसीत् अग्रेऽपि च भविष्यति ।

स हि तस्याः समीपं गत्वा स्थितोऽभूत् । शिष्टाचारपूर्वकं च अभिवादनं कृत्वा पुस्तिकां तां स्त्रियं प्रत्यर्पयामास । यदा सोऽब्रवीत् तदा एव भग्नस्वप्न-कल्पनानां कारणेन तस्य कण्ठावरोधोऽभवत् ।

"देवि ! एषोऽस्म्यहं दिनेशः प्रमत्तगायकः तथा भवती—भवती, सम्भा-व्यते यत् सुषमा भविष्यति । अहं किल पर प्रमुदितोऽस्मि यदयं भवत्याद-र्शनदानकष्टमकार्ष अस्मै अकिञ्चनाय । किञ्च भवती मदीयं 'निमन्त्रण स्वीकरिष्यति ।"

सा मन्दमहासीत् । "पुत्र नाहं जाने यत् किमिदं सर्वम् !' सा अब्रवीत् "किन्तु सा पीतशाटिका" युता प्रौढा याऽधुनैव अनेन मार्गेण गता, माम्-इदं पुष्पं धारणाय कथितवती । तया एवमपि कथितमासीत्- यत्- यदि भवान् मया सह गमनेहां प्रकटयेत् तदाहं भवन्तं सूचयेयं यत् सा बाला परतः दृश्यमानेऽस्मिन् भवने श्रीमन्त प्रतीक्षन्ती तिष्ठति । सा एव कथितवती यदियं भवदीया निकषाऽस्ति । मदीयोऽप्येकः पुत्रः संगीतकारः । कस्यापि गायकस्याहं किमपि उपकारमनेन कर्तुमर्हा भविष्यामि इति कृत्वैव मया तस्यैषा वार्ता मानिता ।

—: ० :—

## प्रार्थना

दिव्यज्योतिः के ग्राहकों से नम्र निवेदन है कि वे अविलम्ब गत वर्षों का शुल्क कार्यालय को भेज कर कृतार्थ करें ।

सम्पादक

# लाहौल स्पीति सं० परिषद् निर्वाचनम्

१ जुलाई १९८५ को आदरणीय प्रेमलाल शास्त्री महामन्त्री हिमाचल प्रदेश संस्कृत शिक्षक परिषद् की अध्यक्षता में जिला लाहौल स्पिति में जिला कार्यकारिणी संस्कृत शिक्षक परिषद् १९८५-८७ द्विवार्षिक का निर्वाचन सर्व सम्मति से सम्पन्न हुआ।

(१) संरक्षक:—सर्व श्री रामदत्त रा० मा० पा० चोग्गग लाहोल।
(२ प्रधान: श्री उधोराम शास्त्री रा० उ० पा० रंगरोल स्पिति।
(३) उप प्रधान श्री रामानन्द शास्त्री रा० उ० विद्यालय गोन्धला लाहौल।
(४) महामन्त्री श्री देश राज गौतम शास्त्री रा० उ० पा० शिक्षा लाहौल।
(५) सहायक सचिव श्री वजलाल शास्त्री उ० मा० पा० चिचम स्पिति।
(६) प्रचार मन्त्री श्री परमानन्द शास्त्री रा० उ० पा० मालंग लाहौल।
(७) कोषाध्यक्ष: श्री गणेश कुमार शास्त्री रा० उ० पा० काजा स्पिति।
(८) लेखाकार : श्री सन्तोष कुमार शास्त्री रा० उ० पा० लाट लाहौल।

प्रदेश प्रतिनिधि :—

(१ श्री सतीश कुमार शास्त्री रा० उ० पा० जाहलमा लाहौल
२) श्री देस राज शास्त्री रा० उ० पा० लाहौल स्पिति।

नव निर्वाचित कार्यकारिणी ने जिले भर में अमर भारती के प्रचार व प्रसार तथा संस्कृत शिक्षकों की कठिनाईयों के सन्दर्भ में प्रदेश संस्कृत शिक्षक परिषद को सहयोग देने का सकल्प लिया।

देशराज शास्त्री
महामन्त्री
हि० प्र० संस्कृत शिक्षक परिषद
लाहौल एवं स्पिति मण्डल

— —

# हि० प्र० संस्कृत परिषदः सदस्यताभियानम्

जिला प्रधान.
हिमाचल प्रदेश संस्कृत शिक्षक परिषद

विषय :

परिषद की सदस्यता एव चुनाव

हिमाचल प्रदेश संस्कृत शिक्षक परिषद की ८ जून, १९८५ को कांगड़ा में सम्पन्न बैठक के निर्णयानुसार परिषद के चुनाव १९८५–८७ की द्विवार्षिक की अवधि के लिये अक्तूबर मास तक पूर्णतः सम्पन्न हो जाने चाहिये। राज्य स्तर पर चुनाव तभी हो सकेंगे जब समस्त प्रदेश में पहले तहसील इकाई और फिर जिला इकाई के चुनाव कर लिये जाएं। इसलिये आप अपने जिला की सभी तहसील इकाईयों को

निर्देश दें कि वे तहसील स्तर पर प्रत्येक परिषद का सदस्य बनाकर सितम्बर, १९८५ के वर्ष में चुनाव पूर्ण कर ले तथा सितम्बर ८५ के उतराधं में जिला स्तर पर चुनाव कार्य पूर्ण हो जाना चाहिये अपने जिला की सभी तहसील इकाईयों से गत वर्ष का आय-व्यय लेखा विवरण भी चुनाव कार्य के साथ ही मगवा ले तथा प्रदेश स्तर पर चुनाव होने से पूर्व आप अपने जिला का लेखा विवरण निश्चित रूप से हमें भेज देवें।

आप से निवेदन है कि आप अमर भारती की सेवा में समर्पित होते हुए संस्कृत एवं संस्कृतज्ञों के उत्थान के लिये, परिषद के सदस्यता अभियान को सफल बनाए। भविष्य में सरकार की ओर से परिषद की मान्यता तभी सम्भव है जब प्रदेश के समस्त संस्कृत शिक्षकों की पचास प्रतिशत से अधिक संख्या में परिषद् के सदस्य हों इसलिए प्रदेश का प्रत्येक संस्कृत शिक्षक परिषद् का सदस्य होना चाहिये इसी में परिषद् की शक्ति और सामर्थ्य निहित है।

| गोविन्दराम शर्मा, | दुर्गादत्त शर्मा | प्रेम लाल सास्त्री |
|---|---|---|
| प्रधान | मुख्यालय महामन्त्री, | महामन्त्री, |
| हि. प्र. स. शिक्षक परिषद्, | हि. प्र. स. शिक्षक परिषद् | हि.प्र. स. शिक्षक परिषद् |
| राजकीय उच्च पाठशाला | रा. माध्यमिक पाठशाला | रा. उच्च पाठशाला, |
| फागली, शिमला | अनाडेल, शिमला | मल्याबर विलासपुर, हि. प्र. |

प्रतिलिपि सूचनार्थ एव आवश्यक कार्यवाही हेतु प्रेषित है :—

१. सचिव जिला संस्कृत परिषद् हिमाचल प्रदेश।
२. सदस्य कार्यकारिणी, हि० प्र० संस्कृत शिक्षक परिषद्।
३. प्रधान तहसील इकाई हि० प्र० संस्कृत शिक्षक परिषद्।

प्रेमलाल शास्त्री
महामन्त्री

## हि० प्र० संस्कृत परिषदः मान्यता

No. EDN H (III) 5-22/84 (Loose File)
Directorate of Education,
Himachal Pradesh.
Dated Simla, The ..........
9 July 1985

To
All The District Education officer,
In Himachal Pradesh, State.

Subject :— Meeting with the H. P. Sanskrit Sikshek Parishad.

Himachal Pradesh Sanskrit Shikshak Parishad has desired that like other Union/Association they may also be invited to discuss their problems with the authorites. Hence you are advised that Quarterly meeting may beheld with the H. P. Sanskrit Shikshak Parishad un der intimation to this Directorate.

Director of Education
Himachal Pradesh

सम्पादकीयम्

# हिमाचल प्रदेशे संस्कृतयुगोत्थानम्

हिमाचलप्रदेशस्य वीरभद्रसिंहप्रशासने यत्रानेकक्षेत्रेषु महत्त्वपूर्णनिर्णयाः जातास्तत्रैव संस्कृतक्षेत्रेऽपि भूयान् – उत्थानमभूत् । अत्र विशेषतः समुल्लेखनीयमिदमस्ति यत् संस्कृतकालेजानां समुत्थानम्, तेषु नवीनपाठ्यक्रमचालनम्, संस्कृतशिक्षकपरिषदा सह प्राशासनिकाधिकारिणां विचारविमर्शः । संस्कृतभवननिर्माणं, संस्कृतलेखकानां सम्मानम् अनेन सहैव संस्कृतस्यावश्यकाध्यापनाय अपि शिक्षासचिवमहाभागेन निर्देशः निष्कासित एव । एतत्सर्वं संस्कृतोत्थानभूमिका ।

o

# सं० शि० परिषदः सार्वजनिकक्षेत्रम्

अस्माभिः परिषदः संस्थापनाकालेऽथ पुनरपि बारं बारं कथितमासीत् यत् प्रदेशस्य प्रत्येक मण्डलेषु प्रतिमासं क्रमेण परिषदा संस्कृतसम्मेलनायोजनं कर्त्तव्यम् । तत्र संस्कृतस्य सार्वजनिकसम्बन्धस्थापनाय च प्रयासाः विधेयाः परन्तु पर्याप्तकालावसानेऽपि न तादृशः प्रयासः दृष्टः । अनेनैव परिषदः संस्कृतरक्षाकार्यं सिद्धि यास्यति । आशासेऽधिकारिणः सदस्याश्च न केवलं प्रशासनमुखापेक्षणमेव सर्वदा करिष्यन्ति — अपितु स्वयमपि किमपि संस्कृतप्रसाराय करिष्यन्ति ।

**संस्कृतञ्चैव संस्कृतिः, संस्कृतिः संस्कृताश्रिता इति अवधेयम् ।**

— केशव शर्मा

R. N. 6384/57 Registered No 10

# हिमाचल प्रदेश

## आर्थिक स्वाधीनता की ओर एक और ठोस कदम

**छठी योजना के सफल कार्यान्वयन के बाद राज्य महत्वाकांक्षी सातवीं योजना को अमली जामा पहनाने के लिये अग्रसर।**

मुख्यमन्त्री श्री वीर भद्र सिंह,

अगले पांच वर्षों के महत्वपूर्ण कार्यक्रमों में शामिल हैं :—

- ★ भारत के पहले बागवानी एवं वानिकी विश्वविद्यालय की स्थापना।
- ★ रीजनल इंजीनियरिंग कालेज और १० डिग्री कालेज खोलना।
- ★ सभी जिलों में क्षेत्रीय ग्रामीण बैंक खोलना।
- ★ विश्व बैंक की सहायता से ६२.१० करोड़ रुपये की लागत की सामाजिक वानिकी (अम्ब्रेला) परियोजना को पूरा करना।
- ★ अन्तर्राष्ट्रीय विकास की अमरीकी एजेन्सी (यू० एस० ए० आई० डी०) की सहायता से ८६.६ करोड़ रुपये की भूमि एवं जल विकास परियोजना की शुरुआत।
- ★ अब-बिजली की उत्पादन-क्षमता में १२४ प्रतिशत का बृद्धि करना और बाकी बचे तमाम २.३०३ गांवों में बिजली लगाना।
- ★ ५०,००० बायो-गैस प्लांट लगाना।
- ★ दस नए विकास खण्डों में एकीकृत ग्रामीण ऊर्जा परियोजना शुरु करना।
- ★ राज्य के बाकी बचे तमाम २,९४९ गांवों को पीने का पानी पहुंचाना।
- ★ पहचानशुदा तमाम गन्दी बस्तियों का सुधार करना।
- ★ फलों की डिब्बाबन्दी के लिये प्रति वर्ष गत्ते के दो करोड़ डिब्बे तैयार करने के लिये फैक्टरी की स्थापना।

हिमाचल प्रदेश की सातवीं पंचवर्षीय योजना। १,०५० करोड़ रुपये की नियत की गई है। यह राशि छठी योजना के ५६० करोड़ रुपये के मूल परिव्यय मे ८७.५ प्रतिशत अधिक है।

आज, स्वाधीनता दिवस पर ४४ लाख हिमाचलवासी राज्य की सातवीं योजना को प्रभावशाली ढंग से सफल बनाने का संकल्प लेते हैं।

संस्कृतस्य

★

सचित्र –

★

मासिकम्

राजस्थानस्य स्व. पं. श्री गणेशराम शर्मा, संस्कृतस्य श्रेष्ठ-अध्यापकः, पत्रकारः, समालोचकश्च येन स्व-जीवनकाले संस्कृतस्य प्रसार विकासकृते उल्लिखितविविध क्षेत्रेषु स्वयोगदानमकारि ।

शिमल

★

सितम्ब

हरियाणायाः महामहाध्यापकः स्व. पं० छज्जूराम विद्यासागरः येन विविधसंस्थामाध्यमेन युवजनप्रोत्साहनेन च संस्कृतप्रसारविकासकृते सर्वदा प्रयासाः कृताः ।

# विषयानुक्रमः

| सं० | विषय | लेखक | पृष्ठ |
|---|---|---|---|
| १. | मेवाड़ मन्दिराणाम् | डा. शक्तिकुमार शर्मा शकुन्त | १ |
| २. | अम्बेडकराष्टकम् | डा, सुरन्द्र अज्ञात, बंगा (पञ्जाब) | ४ |
| ३. | संस्कृतस्य शत्रवः | श्री निगमस्वरूप शास्त्री | ५ |
| ४. | स्मरामि कस्याः | आचार्य प्रेमलाल गौतमः | ६ |
| ५. | श्री अमरनाथरहस्यम् | श्री जगत्रवि शास्त्री, कश्मीर | ७ |
| ६. | कीदृगवसन्तागमः | श्री नरेश कुमार बत्रा, | १२ |
| ७. | साहित्य सरिता | कार्यालयः | १३ |
| ८. | हि. प्र. प्रशासनम् | ,, | |

## परिचयः

संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, दूरभाष : 3859
प्रधानसम्पादकः— प्रा० केशव शर्मा एम. ए., एम. फिल, साहित्यरत्नम्, ,, 8-200
दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-७ (हि.प्र.)

मुद्रकः प्रकाशकः—
भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि.प्र.)
स्वामी :—श्रीमती आचार्य रत्नकुमारी शर्मा

सितम्बर १९८५, भादो २०४२ — वर्षम्-२९ अङ्कः १२
वार्षिक मूल्यम् २० ५०

# मेवाड़मन्दिराणां बाह्यतक्षणां तस्य ध्वन्यार्थम् च

भारतीयतक्षणशिल्पस्य चरमोत्कर्षः मन्दिरेषु दरीदृश्यते । मेदपाट क्षेत्रे उपलभ्यमानमंदिरेषु महाराणानाम् इष्टदेवएकलिगमंदिरः महाराणा जगदिसंहभूभुजा निर्मितः जगन्नाथराय मंदिरश्च विख्यातो स्तः । इयं लोकानुश्रुति प्रसिद्धा यत् एकलिग-मंदिरस्य निर्माणम् बाप्पा-रावलेन विक्रमस्य अष्टम शताब्द्यां कृतम् । कालानुक्रमेण अनेकैः मेदपाट शासकैः महाराणापदसुशोभितैः एतस्य मंदिरस्य श्रीः वर्धिता नवनिर्माणाश्च कृताः१ । जगन्नाथ राय (जगदीश मंदिर इति नामा: लोक विख्यातः) मंदिरस्य प्रतिष्ठा महाराणाजगत्सिंहेन विक्रम संवत् १६०८ तमे द्वितीय चैत्र शुक्लपूर्णिमा-तिथौ कृता२ । एतयोः द्वयोः मन्दिरयोः बाह्यवर्ति तक्षणकला यावती मनोहारिणी लाभती एव विवादास्पदापि वर्तते । भारतसर्वकारेण प्रसारितविज्ञप्तौ अपि एतस्य चित्रचनिषेधः कृतः । मंदिरद्वयस्य बाह्यभित्तिषु अनेका आकृतयः उत्कीर्णाः नैकपंक्तिषु अधोवर्ति प्रथम-पंक्तौ हस्तिनः तदुपरिवर्तिद्वितीयपंक्तौ वाजिनः तृतीयपंक्तौ मैथुनरत-युगलम तदनन्तरं च देवस्य कस्यापि आकृतयः सन्ति । मैथुनरत-युगल-मूर्तिम् दृष्टवा जनाः नयनानि निमीलयन्ति, कथयन्त्यपि यत् का आवश्यकता अस्मिन् अध्यात्मप्रधानस्थाने कामस्य एतन्नग्नरूपस्य । किम् प्रभावम् विसर्जयिष्यन्तीमाः आकृतयः भावि संततिषु४ ।

यदि मैथुन आकृतीः प्रसंगम् परिलक्ष्य पश्यामः तर्हि नैतावती युज्यते किन्तु आसु मूर्तिषु विद्यमानम् क्रमम् द्रष्टवा एव एतस्य संगतिः प्रतीयते । संश्लिष्टभारतीयसंस्कृतौ अपुरुषार्थ-चतुष्टम वर्णचतुष्टम-आश्रमचतुष्टयानाम् महत्वं वरीवर्ति५ । एताः चतस्रः पंक्तयः अपि किंचित् वर्णनम् स्वस्मिन् धारयन्ति इति मे मनसि आयाति ।

लक्ष्मी गजवाहिनी वर्तते, गजः एव सम्पन्नतायाः समृद्धेः परिचायकः६ एवं प्रतीयते यत् शिल्पी कथयति यत् संसारे अर्थस्य लक्ष्म्याः महिमा सर्वातिशायिनी वर्तते ।

---

१ श्री एकलिंगस्य समध्यसंस्थं प्रसादमुख्यं रचयांचकार । वेदोदितां पाशुपतेत सेवां विस्तारयामासे महोपचारैः । लेखकेन सम्पादमानं अमर काव्यम् ३-७

२ शते सप्तदशेऽती ख्रीष्टाख्ये सुमाधवे । द्वितीये पूर्णमास्यांतु वर्षन्हर्षान्महाघनम् । श्री जगन्नाथराख्यं स्थापयामास केशवम् श्री लक्ष्म्याः सहितं चापि दानोराव पूरातनत् । लेखकेन सम्पादमानम् अमरकाव्यम् सर्वं २०: ७६, ७७

३ उभयोः सुख्यमंदिरयोः बाह्य भित्तिषु तक्षिता इमाः आकृतय, अद्यापि वर्तन्ते ।

४ अनेकेषु अवसरेषु विभिन्नेषु तथाकथितप्रगतिशील पत्रिकासु ।

५ वैदिक संस्कृति का विकास—लक्ष्मण शास्त्री जोशी-९८, १०४ ।

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बांधवाः ।
यस्यार्थः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥

अतएव धनशक्तेः महिमारूपे गजः तेन उत्कीर्णः । गजपरवर्त्युत्तर वाजिपंक्तिप्रदर्शनेन शासकस्य शासन-शक्तेः प्राधान्यं प्रतिभाति । अश्वः शासनस्य शक्तेश्च प्रतीकत्वेन अश्वमेधयज्ञवाजपेययज्ञानाम् महत्वात् स्वीकृतः७ । अतएव अश्वानाम् पंक्तिः गजानामपि उपरि प्रदर्शनात् स्पष्ट प्रतीयते यत् शासनस्य कृपा-कटाक्षं विना न कोऽपि धनी सुरक्षितो, न तस्य व्यापारः व्यवसायः वा सम्यक् प्रचलेत् । जानन्ति एव सर्वे जनाः यत् शासनस्य नियमनानुसृत्य एव बैंकानाम् राष्ट्रीयकरणम्-उद्योगानाम् राष्ट्रीयकरण-प्रसंगेनिसहाया सर्वे धनकुबेराः ।

तदनन्तरवर्तिपंक्तिषु विद्यमानमैथुनाकृतयः शासनशक्तेरपि अति शायिनीम् योगशक्तिम् द्योतयन्ति । मैथुने वर्तमानाः स्त्रीपुरुषाः वस्तुतः सांख्य दर्शने विद्यमानयोः प्रकृतिपुरुषयोः एव प्रतीकाः८ । शैवदर्शने तौ प्रकृति-पुरुषौ एव शक्तिशिवरूपौ भणितौ । मायया आवृतौ तौ प्रकृतिपुरुषौ संजातौ यदा प्रकृतेः विकारः प्राणी पुरुषरूपस्य परमात्मनः लिंगम् — परिचयचिन्ह गृहाति पुरुषं प्रकृति अभिज्ञायते तदा सांसारिक मोह, महिमा माया एवं तुच्छानि हेयानि एव प्रतीयन्ते तदानीम् महत्त्वम् धन-शक्तेः राज्यशक्तेश्च१० । आत्मार्थं भुवंत्यजमानस्य योगिनः कृते न कोऽपि मोहः वसुकांचनयोः न किमपि भयम् क्षणभंगुरशरीरस्य तदा धनशक्तेः राजशक्तेश्च तत्कृते निःस्पृहाया ।

---

६ चित्रेषु पद्मासने संस्थितायाः लक्ष्म्याः समीपे वर्तमानो गजो लक्ष्म्या वाहनत्वेन प्रतीयेते । लक्ष्म्याः वाहनस्तु गजः धनस्य स्वाभाविको प्रतीकः ।

७ अश्व पशुनामग्नादो वीर्यवत्तमः, तैत्तरीयसंहिता ३: ८: ७। ।
क्षत्रं वा अश्वो विडितरे पशवः शतपथ ब्राह्मण १३: २: २: ७: ।
यो वैवाजपेयः । स सम्राट्त्सव, तै २ ७: ६: ।

८ ''प्रकृतिः वास्तविक एव-प्रकृति रूपेण पुरुषस्याध्याससिद्धिः सांख्य दर्शनम कपिल २ :५'' सम्पूर्ण सृष्टेः रचनां प्रकृति विकृतिमयाम् महद् अहंकार, पंचतन्मात्रा, पचतत्व, एकादश इन्द्रियैश्च विदधाति । किन्तु सम्पूर्ण सृष्टि पुरुषस्य दर्शनेन तत्सबंधेन बिना असंभवाम् । अतएव सम्पूर्णसृष्टिः तस्य पुरुषस्य (ईश्वरस्य) सृष्टि कथ्यते आभासते । एवमेव सम्पूर्ण क्रिया स्त्री एव करोति किन्तु पुरुष सबंध तत्राव श्यकः । प्रतीयते इदम् अवधाय एव स्व प्रकृतिपुरुषौ. प्रतीकत्वे स्त्री पुरुषोः तथ्यमत्रजातम् ।

अब माया का कार्य आरम्भ हो जाता है अहमश हो जाता है पुरुष और इदमंश प्रकृति भारतीय दर्शन, बलदेव उपाध्याय पृ ४५७, ४७४ ।

१० तत्वाभ्यासात्नैति नेतीति त्यागाद् विवेक सिद्धिः सांख्यदर्शन-कपिल · · ७५

भूतभविष्यवर्तमानानाम् हस्तामलक वत् प्रेक्षमाणस्य योगिनः सम्मुखे सांसारिका नृपाः श्रेष्ठिनश्च अनुकूलवेदनीयत्व-सुखप्राप्तये प्रतिकूलवेदनीयत्वदुःख निवारणाय आयान्ति । योगीश्च आध्यात्मिक, आधिदैविक, आधिभौतिकात्मक तापत्रयस्य निवारणार्थं (बहुश्रुतत्वात्) लौकिक पुरुष-प्रत्यादिनं पारमार्थिकम् च उपायान् निर्दिशति११। अतएव योग-शक्तेः महत्त्वम् राजशक्तेः उपरि वर्तते इत्युद् घोषयितुम् समुत्सुको शिल्पी ।

मैथुनाकृतीनामपि उपरि वर्तते भगवतः विष्णोः मूर्तिः या द्योतयति यत् सर्वेश्वरस्य शक्ति योगशक्तिमपि अतिशेते । सैव सर्वोच्चा सर्वप्रमुखा सर्वातिशायिनी अतएव तस्य तक्षणे सर्वोपरि सञ्जातम् । न केवलं शक्तिक्रम-क्षेत्रे एव अपितु चतुर्वर्णानाम् क्रमिक-महत्त्वम् तदुपरि देवस्य स्थानमपि अनेन तक्षणेन स्पष्टम् प्रतीयते । धनदेवी लक्ष्म्याः वाहनत्वेन वैश्यवर्णस्य महत्वं, शक्तेः प्रतीकत्वेन अश्वेन क्षत्रियस्य महत्ता, योगशक्त्वेन ब्राह्मणस्य महिमा देवमूर्तित्वेन ईश्वरस्य माहात्म्यम् प्रतिपादितम् ।

भारतीयसंस्कृतौ संमान्यतानाम पुरुषार्थचतुष्टयानाम प्रतीकरूपं अनेन तक्षणेन स्पष्टी भवति । गजः धनदेव्याः वाहनत्वेन अर्थस्य वाजि: राजशक्तेः प्रतीकत्वेन सत्तायाः सत्ताधारिषु धर्मरक्षायाः दायित्व-स्वरूपेण व्यवस्थायाः समाजधारणस्य नियमत्वात् धर्मस्य प्रतीकम् १२ वर्तते एवमेव मैथुनरत-युगलम् कामस्य शिवविष्णुरूपाभ्याम् मोक्षस्य-महत्त्वम् प्रकटितम् भवति ।

एवम् स्पष्टम् प्रतीयते यत् न केवलम् तक्षणकलायाः एव सांस्कृतिक-प्रतीकानाम् ज्ञानमपि जीवनस्य महत्वपूर्णक्षेत्राणाम् पारस्परिकसम्बन्धमत्र स्पष्टी-भवति । आधुनिकयुगे प्रचलितानाम् मार्क्स१३ विश्वहिन्दू परिषद्, रजनीश,१४ शंकराचार्याणाम् १५ एकल मतानाम् समन्वयमपि अनेन भवितुम् शक्नोति । जीवनस्य चतुर्मुखीविकासस्य मंगलकामना विहिता । मंदिरस्य शिल्पनिर्मात्रा इति मे प्रतिभाति—

— इतिशम् —

डा० शक्तिकुमार शर्मा शकुन्त
सहायक शोधाधिकारी, राजस्थान विद्यापीठ, उदयपुर
हाड़ोती शोध प्रतिष्ठान कोटा–१

---

११ उपदेश्य उपदेष्टृत्वात् तत् (मोक्षस्य) सिद्धिः सांख्य दर्शन, कपिल ३ : ७९

१२ धारणाद्धर्ममित्याहुः धर्मोधारयते प्रजा इत्यादिवचनात् ।

१३ अर्थस्य प्राधान्यम् मन्वानो जनोऽयम् अन्यान् सर्वान् क्षेत्रान् न्यक्करोति । दास केपिटल. कम्युनिस्ट मेनीफेस्टो नामकयोः पुस्तकयोः ।

१४ आधुनिक वात्स्यायनः श्री रजनीशः संभोगम् प्रधानम् मनुते "संभोग से समाधि" इति पुस्तके एतन्मतं प्रतिपादितम् ।

१५ "ब्रह्म सत्य जगन्मिथ्या" इति मन्वाना अद्वैत वेदान्तसम्प्रदायस्य प्रतिपादकाः इमे आचार्याः भौतिक जीवने न विश्वसन्ति ।

अम्बेडकरजन्मदिवसे श्रद्धांजलिः

# अम्बेडकराष्टकम्

डा० सुरेन्द्र अज्ञात

अम्बेडकरो जयति शम्बूककुलदीपकः ।
भारतीयं संविधानं रचयामास यो नवम् ।१।

स आसीत् संस्कृतस्नेही, सुरगीः समुपासकः ।
शूद्रत्वान्न स शक्तोऽभूत् अध्येतुं संस्कृतं तदा स१ ।।२।।

लिख्यते पुण्यश्लोकोऽत्र संस्कृते तत्कृते मया२ ।
अस्पृश्यो न तदाऽऽसीद्धि संस्कृत ज्ञेषु सर्वथा ।३।

भवतु प्रथमर्षणं पूर्वजकृतदुष्कर्मणामिति३ ।
यद्यपि जानामि न भविष्यत्यकृतं कृतमनेन ।४।

अम्बेडकरः आसीत् विंशशताब्दीज एकलव्यः ।
नवाः द्रोणाः येन निजसामर्थ्येन सरलीकृताः ।५।

भारतस्य स्मृतिकर्ता बभूव स शूद्रेषु जातोपि सन् ।
ब्राह्मणास्वतेजसा तेन तिरोहिताः विद्याभास्करेण ६।

स जगाम शरणं बुद्धं प्रबुद्ध बुद्धिवादप्रचारकम्,
आरोपितवांश्चोत्पाटित बोधिवृक्षं पुनः भारतभुवि ।७।

तस्मै नमः अम्बेडकराय शूद्रकष्टनिवारकाय,
विधिविदे बुद्धिवादिने मानवतायाः हितेरताय ।८।

अम्बेडकराष्टकमिदं यः पठति शृणोति च,
स जातिभेदं त्यजेत्, बुद्धिवादस्य च प्रि भवेत् ।९।

---

१ तस्य जीवनचरिततो ज्ञायते — स संस्कृतमध्येतुं येते, पर महाविद्यालये कोपि संस्कृताध्यापको अस्पृश्येषु जातं तमध्यापयितुं न समर्थो बभूव येन स फारसीं अधिजगे।

२ ब्राह्मणेषु जातेन इत्याकूतम्, ३ मनसि निधाय इति शेषः ।

# "संस्कृतस्य शत्रवः"

निगम स्वरूप शास्त्री

संस्कृतस्य शत्रवः ! के सन्ति ? देशीयाः, विदेशीयाः, उतवा आंग्ला देशीयाः जर्मन देशीया वा । नहि नहि एतेषु देशीयानतिरिच्य सर्वेपि संस्कृतस्य मित्राण्येव सन्ति । विदेशेषु संस्कृतस्य एतादृशी दशा नास्ति यद्यपि इयं तेषां भाषा नास्ति । परं भारतं तु संस्कृतस्य मूलस्रोतः स्थानमस्ति भारतस्य सर्वासां भाषाणां जननी शब्दकोष दायिनी च संस्कृतमेव ! परं भारतीया – एतस्या कृते किमपि नाचरन्ति । अतः भारतीया-एव संस्कृतस्य शत्रव सन्ति। भारतीयेष्वपि संस्कृताध्यापका, ऽध्यापका, आचार्या, प्राचार्या आत्मानं बहुमन्यमाना: संस्कृत-ज्ञान-गर्वेण-अहंकारवशीभूताः, उत्फुल्लगल्लैः फूत् कुर्वाणाः, ये प्रतिपादयन्ति यदं हषडाचार्योस्मि अपरः भणति अहं नैयायिकोऽस्मि, अन्यः वदति अहं वैयाकरणोऽस्मि । अत-अहं श्रेष्ठः, वरिष्ठः एवं कनिष्ठश्चेति । अपरे च तथाकथितधार्मिकपाखण्डाचार्या संस्कृतमाश्रित्य कृत्य कर्मकाण्डेन ज्योतिषविद्यया च सुगमतया स्वजीवनयापनं कुर्वाणा, संस्कृतस्य प्रमाणपत्ररूपेण मस्तके त्रिपुण्ड्रधारिणः तथाकथितलम्बोदराः ब्राह्मणाः सगोलका-स्त्रिणश्चापि संस्कृतस्य परमशत्रवः सन्ति । संस्कृतस्य प्रचारप्रसारव्याजेन मनुदान-भक्षकाश्चाप्येतेषु अन्यतमा सन्ति। यतोहि-एतेषां जीवनस्याधारः संस्कृतमस्ति परमेते अर्थलोलुपा, स्वार्थवशीभूता, त्यागरहिता संस्कृतं प्रति स्वकर्त्तव्यात् पराङ्मुखा जाताः । यन्नोचितम् ।

किमेते प्रतिपादयिष्यन्ति यदेभिः कलहमतिरिच्य अन्यदपि किमपि कृतम् ? संस्कृत संघाय कोऽपि कोषः स्थापितः ? आन्दोलनं कृतम् ? संस्कृतस्य पदानां समाप्तौ विरोधः कृतः ? नवीनपदानां निर्माणार्थं अभ्यर्थना प्रदत्ता सर्वकाराय ? कोऽपि राज्य-स्तरीयः संस्कृतशिक्षकाणां संघः नास्ति पञ्चाम्बु राज्ये, यद्यस्ति तर्हि प्रतिमास शिक्षा-धिकारिणः न मिलति । एतेषां प्रश्नानामुत्तररूपेण निराशावादमेव दरीदृश्यते ।

पञ्चाम्बु प्रान्ते सन्ति केचन् अङ्गुलिगण्याः, निस्वार्थसेविनः, मान्या सुरभारती-पुत्राः, जीवितात्मानः संस्कृतविद्वांसः ये आजन्मन प्रभृति देववाणीं सेवन्ते । तेषां सतत् प्रयासैरेव पञ्चापे संस्कृत जगति प्राण संचारः । धन्याः-सन्त्येते प्रातः स्मरणीयाः ।

निराशावादिनामिदं कथनं यत् वयं किं कुर्मः ? संस्कृतस्य प्रचार-प्रसारस्य कार्यं तु सर्वकारस्यास्ति । अस्माभिः-प्रशासनाय ज्ञापनं दत्तम्, परं सर्वकारेण न किमप्याच-रितम् । इदं सत्यं यत् प्रमादोऽयं स्तुत्यः । परं अद्यतनीने प्रजातन्त्रीय शासने मतानां युगे केवल ज्ञापनैकार्यं न सम्भवति । अपितु सम्मिलय एकत्रीभूय प्रयाणरूपेण उच्चनि-

नाद पूर्वकं समुद्घोष: करणीय: यत्—"पञ्चाम्बुसर्वकार: मुर्दाबादेति ।" अन्यथा इदं तु भविष्यत्येव—

१०+२ प्रणाली आयेगी
संस्कृत लुप्त हो जायेगी

अत: निराशां, चाटुकारितां, च त्यक्त्वा एकीभूय सोत्साहं पञ्चाम्बु सर्वकार-विरुद्धं संघर्षमायोजनीयम् । अन्यथा १०+२ शिक्षाप्रणाली घातयिष्यति युष्मान् संस्कृतं च । संकाले अद्यापि जीवति हन्तव्य: संस्कृतज्ञ स: ।

१९०५ तमे खीष्टाब्दे योगिराज श्री अरविन्दघोषेण कृतासु सप्तभविष्यवाणिषु सप्तमी इयं यत् १९८५ तमे खीष्टे संस्कृतं भारतस्य राष्ट्रभाषा भविष्यति अत: अस्यास्साफल्याय विद्वद्भि अद्य एव प्रयास: आरम्भणीय: स्वकर्त्तव्यं प्रति उदासीना विद्वांस: चेत् चेतनतामागच्छेयु: तह्येव सर्वं सम्पादयितुमर्हन्ति । "क्लैब्य मा स्म गम: पार्थ" इति संकेत रूपेण श्रीमदभगवद् गीता चेतयत्यस्मान्, परं हा—हन्त । वयमेव न शृणुम: । "जब बाण लागे तबै रोष जागे" श्री गुरू गोविन्द सिंह पादानां वाण्यनुसारं रोष: प्रदर्शनीय: । यत: पञ्चाम्बु सर्वकारेण संस्कृतस्योपरि द्वादशाङ्कीय-(१२ नम्बरी) शिक्षाप्रणाल्या: शर: निपातित: । अत: सोत्साहं उदारीभूय संघर्ष करणीय: ।

सरकारी हाई स्कूल
मल्लेहर्दास (पटियाला) पंजाब

# "स्मरामि कस्या: मुखारविन्दम्"

प्रेमलाल गौतम आचार्य

असितघनमेचककेशजालम्, सिन्दूरबिन्दुसंयुक्तभालम् ।
लाक्तकरसेन विजितप्रवालम् स्मरामि कस्या: मुखारविन्दम् ॥
रम्यं पक्वनारंगवर्णम्, शिरोरुहैराच्छादितकर्णम् ।
सस्मितं सदैवाघरपर्णम्, स्मरामि कस्या: मुखारविन्दम् ॥
रक्ताक्तप्रोष्ठौ प्रवालरूपौ, शुभ्रदन्तावलि च विभाति ।
कामशरतिर्यक्भृकुटिजालम्, स्मरामि कस्या: मुखारविन्दम् ॥
कर्णयोर्भाति तव कर्णिकारम्, नासाग्रभागे नासाभरणम् ।
सर्वं खलु मे आनन्दकरम् स्मरामि कस्या: मुखारविन्दम् ॥
अद्वितीयाललितभावभङ्गिमा, पटान्तगूढेस्मितमानने न्दृते ।
धन्यं खलु इदम्रचनाकारम्, स्मरामि कस्या: मुखारविन्दम् ॥

राजकीय संस्कृत महाविद्यालय नाहन,
जनपद-सिरमौर (हि. प्र)

# श्रावणपूर्णिमातिथौ श्री अमरनाथरहस्यम्

सितातपत्रं यस्येन्दुः स्वप्रभापरिपूरितः ।
चामरं स्वर्नदीस्रोतः स एकः परमेश्वरः ।१।

यदानन्दाम्बोधेरुदयति पराख्या शशिकला
प्रवृद्धा तन्वङ्गी हृदयगगने पञ्चदशभिः
प्रनीता सर्वाङ्गी हिमगिरिगुहावासनिरतैः
सहस्रारेऽह्नोभिर्गजवदनमाम्नरशमपरैः ।२।

प्रभाते योगीन्द्रैः शमदमपरैर्योगनिरतैः
क्रियासक्तैर्विप्रैर्व्रतनियमयुक्तैश्च यजते ।
व्रजेगोपैर्गोभिर्जयुवतिभिश्चन्द्रवदनः
वृतो देवैर्दैत्यैरमृतमथने सोऽमरपतिः ।३।

पथि श्रान्तैः पान्थैर्बहुविधश्रमैर्मार्गणपरैः
महादुर्गे मार्गे विविधबहुबाधापरिवृते
नमो यस्मै कस्मैचन भवतु देवाय महसे
मनः स्थैर्यं प्राप्तो यतिभिरवियोगेऽमरपतिः ।४।

अनाकारस्तुर्यो गजवदनबिम्बात्समुदितः
परारूपो नादो गणपतिविहारे श्रुतिगतः ।
चतुष्पत्राब्जात्ससहजविमलोऽमाख्यकलया
गतो मूलाधारादनुविधिपदं सोऽमरपतिः ।५।

इति अमरनाथ रहस्यम् समाप्तम् ॥

# अथ अमरनाथदेहगुहा यात्रा

मनः स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।
मन्त्रात्मकं शिवं शम्भुं महामृत्युञ्जयं जप ।१।

देहगुहा मनः पीठे सच्चिदानन्दरूपिणम् ।
निसङ्गं वर्तमानं त्वं प्रभुं पूजय प्रत्यहम् ।२।

लौकिके व्यवहारेऽत्र प्रभोः कैलासवासिनः
प्रतिमाऽमरनाथस्य धार्मिभिः पूजिता सदा । ।३।

सरस्वती समाम्नाति श्रुतिगोचरतां गतम्
महात्मभिः समाख्यातं तथापि त्वं न बुध्यसे
नामरूपात्मकाद्विश्वाद्भिन्नं भावय स्वंप्रभुम् ।४।

स्तुतिरमरनाथस्य देहेऽहंभाववर्जितैः ।
शब्दसमायुक्तैः पठनीया समाहितैः ।५।
एकान्ते हृद्गुहावासे यत्र शान्तिं समाप्नुयात् ॥
कुरुयात्रां पर्वकाले त्राहि मां च जप सदा ।
हरमुखे स्वमात्मानं सर्वतो वरण कुरु
गुहा हृदयनाथस्य सा गुहा संविभावय ।६।
प्रथमा श्री गणेशस्य प्रतिमा शुभलक्षणा ।
गणपतिविहारस्था ऋद्धिसिद्धप्रदा सदा
मूलाधारे महेशस्य द्वारपो दारकः स्थितः ।७।
सृष्टिकर्ता स ब्रह्माख्यो विहारे षोडशाख्यके
षण्मुख इव षट्पत्रे स्वाधिष्ठाने सरोरुहे ।
संस्थितः सर्ववेदात्मा सर्वंवित्सर्वकर्मकृत् ।८।
जलावर्ते शिवपुरे सार्धत्रवलयात्मिका
कुण्डलिनीति विख्याता कुण्डलाकारवर्तिस्थता
जलानीव विवर्तन्ते यत्र प्राणाः समन्ततः ।
समुद्रसप्तकं तत्र निम्नोन्नतपदं गतम् ।९।
अष्टदलमयैः पद्मैः पूरितं प्रकृतेः सरः ।
निवर्तय स्वमात्मानं संसारदुःखसागरात् ।
संयोजय विचारेण ध्रुवे शुद्धे शिवे पुनः ।१०
ऊर्ध्वं गच्छन्सत्वनिष्ठः शिवसायुज्यभाग्भवेत् ।
किमर्थं पतितो दूरे कर्मपाशवशीकृतः ।
निर्मलां मुक्तिदां वाच शृणु मानवसत्तम ।११।
ओंकाररहितो मन्त्रस्तीर्थहीनः स्थलः क्वचित्
न भवेत्परमात्मानं जीवन्मुक्तिबिना क्वचित् ।
सर्वत्र भावय देवं हृत्स्थं मानवपुङ्गव ! ।१२।
नाभिदेशे दशदले सरोजे सत्समागमे
चराचरमयमत्र श्रीहरेः सङ्गमं स्थलम्
यमासाद्य जनाः सर्वे मुच्यन्ते सर्वकिल्विषैः ।१३।
मन्दिरं विजयेशस्य कृष्णचन्द्रविराजितम ।
दृष्ट्वा तत्र भवेन्मित्र हरिश्चन्द्रो महामनः
मुच्यते सर्वपापेभ्यः पारं प्राप्नोति मानवः ।१४।
संकल्पेच्छे परित्यज्य श्रवणवारीति नामके
ग्रामे शिवजटा तत्र परितो राजते सदा ।
अनाहत समाम्नातं मण्डलं सन्विशेषपदम् ।१५।
यथा तथा विशुद्धाख्ये चक्रे कुण्डवलोपमे ।
जीवभावमतिक्रम्य देवपूजां समाचरेत् ।

पच्यते जीवलोकोऽयं सस्यवत् जायते पुनः ।१६।

तिले तैलं यथा व्याप्तं देहे आत्मा तथैवहि
स्वयमेवात्मनात्मानं संयोज्य परमात्मनि ।
जीवब्रह्मैक्यज्ञानाय क्रीडागच्छेच्छिवालयम् ।१७।

शक्तश्चेद् मार्गगमने रहस्य परिपूरिते ।
वीणा यत्र निवर्तन्ते सरिण्ये वायुनिर्भरे
वात्या यत्र प्रकम्पन्ते बलवीराः सहस्रशः ।१८।

मनसोलयविक्षोभं परित्यज्य स्वदूरतः
स्वप्रकाश महादीपं गणेशंनिर्मलाकृतिम्
निश्चलं रत्नदीपं भावयेत्स्वे हृदि स्थितम् ।१९।

आमलेशविहारस्थ पावनं परमेश्वरम् ।
परिक्रम्य तमात्मानमर्पयेदेवपूजने
त्यजेदज्ञाननिर्माल्यं सोऽहं भावेन पूजयेत् ।२०।

भगं तीर्थाख्यके स्थाने स्वर्गद्वारं मनोहरम्
अर्घ्यं पुष्पमयैः प्राणैः सारवित्सु समाहितः
भावयेत्तत्र तं देवमहंकारविवर्जितः । १।

कण्ठदेशगतो योऽसौ भुवनानि चतुर्दश
प्राप्य स्थितो महाविष्णुः प्राणवाहः सदास्थितः ।
आ नीलगंगा संस्थानाद्वाबजन समीपतः
वहति पवनस्तत्र दिवारात्रमनर्गलम ।२२।

अधिकं दुर्गमं मार्गं मध्ये मध्ये प्रतिष्ठितम् ।
सारगर्भं समासेन बुद्धिमान्स्वविचारयेत् ।।
प्रक्रियेव समाम्नाता देहद्वारगता क्रिया ।२३।

शेषनागस्य पर्यङ्के उत्तमः पुरुषः स्थितः
निद्रां तन्द्रां परित्यज्य विरक्तमनसा सदा ।
दिवा रात्रं समाराध्यः रागमुक्तैं विवेकिभिः ।२४।

चित्तसमुद्रे समुद्भूतं पञ्चेन्द्रियतरङ्गकम्
पञ्चीकृतं पञ्चभूतैस्त्याज्यं बुद्धीमता स्वयम्
पद्मनाभः शेषशायी नानारूपधरः स्थितः ।२५।

शनैः शनैः समारुह्य पञ्चालाख्यं महानगम्
चक्रेद्रस्नं स्वमात्मानं सोऽहं भैरव पर्वते
पशुभावमतिक्रम्य स्वात्मस्थं चिन्मयं स्मरेत् ।२६।
समाहितमनोयोगी भवेज्जीवन्मृतोपमः

स्वयमेवात्मनात्मानं ज्ञात्वाधीरः प्रमुच्यते
यद्भावनं तदादानं तत्रैव शमनं पुनः
यत्रोदेति प्रमा प्रेम्णस्तत्रैवास्तं गमिष्यति ।३८।

स्थानमद्यमेनापि नाप्तं जन्मशतैरपि
प्राप्तं तैर्मुनिभिर्नूनं येषामापतितं पुरः
प्रत्यक्षागममात्मानं ज्ञात्वा धीरो प्रमुच्यते ।३९।

तत्र स्फुरति वै नादोऽनाहतोऽनर्गलः
स्वप्नान्ते च सुषुप्त्यादौ तन्निष्कलं निरञ्जनम्
समाधौ मुनिभिर्ज्ञातं तन्निष्कलं निरञ्जनम् ।४०।

इडया पुनरावृत्य प्राप्य स्थानं सुमङ्गलम्
आरुह्य रसपूर्णेन मनसावतरणं कुरु
श्रद्धया 'पितृभ्यः श्राद्धं (दानं) दद्यात्तत्र यथाविधिः ।४१।

त्यक्त्वा गुहां यजेच्छम्भुं यं विना नैव चेतना
समर्पय स्वमात्मानं चैतन्याय परात्मने
यद् गत्वा न निवर्तन्ते वीराः शान्तमहाशयाः ।४२।

शिवोऽसि शिवध्यानत्वं मनागपि न विस्मर
पञ्चभूतमयं देह पुरुषाद्विद्धि त्वं पृथक्
चित्रितं मायया रूपं रज्जौ सर्पभ्रमो यथा ।४३।

आगमापायरहितो जीवचिन्मात्ररूपकः
ज्ञानामृततृप्तस्य यात्रा भवति ज्ञानिनः
अभिव्यक्तिर्निजा तत्र पुण्यवार्ता स्मृता बुधैः ।४४।

नवद्वार निरुद्धैयनं पुरे नवदलाभिधम्
गच्छेत् यत्र पुनर्जन्म न प्राप्नोति नरः पुनः ।
सफला भवति यात्रा देहकर्मसमुद्भवा ।४५।

संसार वनगो देहो देवदारुतरूपमः
देवानां द्वारमाख्यातं मानुष्यं जन्मदुर्लभम्
देहनिर्वाणदः प्रोक्तो ज्ञानदानादिभिर्बुधैः ।४६।

पुनरागमनं नैव भुवनत्रयभूमिषु ।
प्राप्यविष्णुपदं सम्यक् पुनरागमनं कुतः
यमलः कमलस्तत्र भवनश्च सरस्त्रयम् ।४७।

[illegible]
शक्तिरूपा सती तत्र शिवेन सह मोदते ।२७।

संकल्पहीनमनसा रागद्वेषविवर्जितः ।
नेशत्वं नाप्यनीशत्वं कामयेद्बुद्धिमान्नरः ।
देशकालविभागतः प्रशान्तमनसा पुनः ।२८।

परा पश्यन्ती द्वारेण पश्यत्यात्मनि तं विभुम्
वैखरी मध्यमाभ्यां च प्रवेशो नात्र योगिनः
तामवस्थां प्रपद्यन्ते ऋषयः क्षीणकल्मषाः ।२९।

भावयामृतनद्यां भाव स्नात्वा भूतिविभूषणः
गृहस्थामलनिर्मुक्तः शिवपत्सु स्वमर्पयेत् ।
यं प्राप्य न निवर्तन्ते नराः संसारवर्त्मनि ।३०।

शुद्धो बुद्धः स्थितस्तत्र गुहायामष्टसिद्धिभाक
आकाशवस्थितस्तत्र वृद्धिक्षयविवर्जितः
नवनिधिपतिश्चैव पारिजात शिवो मतः ।३१।

स्वाश्चर्यचकितस्तत्र नगनउन्मत्तवच्चर
ईश्वर दर्शनाज्जात शब्द श्रुतिमनोहरम्
ध्यानगम्यं देवगृहे कुर्यात्तालयाश्रितम् ।३२।

गुहामध्ये स्थितं देवं हृद्बिले भावयेच्च तम्
तोषणात्तस्य देवस्य प्रीणन्ति सर्वदेवताः
निसारा नात्र तिष्ठन्ति पाषाणा भूति भूषणाः ।६३।

मनः पाषाणगं देवं स्वप्रकाशं मणिमिव
सन्तं नूपुरशब्दाभं भावयेच्चद्वियत्स्थले
पावयेत्तपसात्मान देहारण्ये मुनिरिव ।३४।

प्रणवप्रियशब्दोऽयं सोऽहमात्मा जपेन्नरः ।
आज्ञाशिखरमासाद्य पर्देन्यस्येत्प्रयत्नतः
नेत्रकपोलयुगल कुरु नीराजनाविधिः ।३५।

निष्कले निर्मले शुद्धे स्वभावपरिपूरिते
सहस्रारे ब्रह्मरन्ध्रे लयं नीत्वा निजं मनः
प्लवमानो विकासेन स्वानन्दमदघूर्णितः ।३६।

ज्ञानामृतनदी तत्र वहति द्वारमर्दिनो
प्रशस्तं स्थानमाख्यातं स्वतन्त्रा यत्र संस्थितिः ।
समाधौ योगिनो नूनं व्युत्थानवत्समाहिताः ।३७।

भर्गपादार्चनं कृत्वा स्वयं संसगतो मन:
मोचयेत्स्वात्मज्योतिस्थं भावयेदग्घतापहम्
जन्म क्लेशविनिर्मुक्त: प्राप्स्यसि परमं पदम् ।४८।

भर्गरूपां शिवां दुर्गां विद्धि त्वं भयहारिणीम्
स्वर्गलोकगता देवा नमन्ति प्रत्यहं नवाम्
इष्टदेवी समाम्नाता प्रमाणा मोक्षदायिनी ।४९।

शिवशक्तिमयं विश्वं नामरूपविभेदत:
नानाकारं समाभाति सुवर्णे कटकादिवत् ।५०।

त्वं संवेद्यमिदं सर्वं रहस्योद्घाटनाच्च किम्
नाथं तं परमानन्दं जगदानन्ददं परम् ।५१।

स्वयमासाद्य यत्नेन परमानन्दभाग्भवेत्
मन: स्थैर्यं समाधाय प्रभुं पूजय प्रत्यहम् ।५२।

———

# कीदृग् वसन्तागम:

नरेश कुमार बत्रा,
व्याकरणाचार्य: एम, ए.
प्रवक्ता: दी. कु. कि. स. ध. आदर्श संस्कृत कालेज, अम्बाला

कान्ता कान्तमुखा विलोलकबरी प्रान्ताञ्चितोर: स्थला,
श्यामा चारुविलासमन्दगमना मानान्वयालङ्कृता ।।
मुक्ताशुक्तिसुधांशुकुन्ददशना येषां प्रिया प्रोषिता,
तेषां शून्यहृदां कृते वद सखे ! कीदृग् वसन्तागम: ? ।।

कामं चुम्बति लम्पटो मधुकर: निर्भिन्नचम्पालताम्,
कामं तित्तलिकापि याति रदने रक्ता युवानं सुमन् ।।
कामं शीतलतां वहन् हिमकर: श्लिष्यत्यहो चन्द्रिकाम्,
कष्टं वल्लभयावमानितषते: दग्धो वसन्तागम: ।।

एकस्मिन् शयने नितान्तविमुखा नि:सर्गतो मानिनी,
माद्यत्कोमलकामवल्लिविकसत्स्वान्तालयस्वामिनी ।।
येषां बालकुचाग्रमर्दनरुषा नाभाषिता भामिनी,
तेषां शून्यहृदां कृते वद सखे कीदृङ्मधोर्यामिनी ।।

प्रेयस्या: विरहानलं शमयितुं यल्लोचनाभ्यां मुहुः,
हृद्देशे परिपातिताश्रुसलिलै: सञ्जातधूमावलीत् ।।
चन्द्रस्याङ्कगताङ्गनामिव परां सन्दिह्य रोषात् निशाम्,
यान्तीं वारयत: कृते वद सखे ! कीदृग् वसन्तागम: ।।

# शक्तिदर्शनम्

(हिन्दी साप्ताहिकम्)

## सम्पादकः

## श्री हुताशन शास्त्री, १२-२ पुरानी मन्डी

## हिमाचल प्रदेश

श्री हुताशन शास्त्रिणः यदा प्राशासनिकसेवायामासन् तदापि-प्रतिक्रियाशीलतया एभिः प्राशासनिकसेवा विहिता। इदानीं सेवामुक्ता एते शक्तिदर्शननामकं हिन्दीसाप्ताहिकं मन्डीतः सञ्चालयन्ति । पत्रमिदं दिव्यभावनापूतम् । राष्ट्रस्य चरित्रोत्थानं, राष्ट्रसेवा, राष्ट्रभक्तिः समाजे दिव्यभावनाजागरणम्, सामाजिककुरीतिविरोधः-इति सन्ति पत्रस्य नियमित-विषयाः ।

प्राचीनदुर्लभ ग्रन्थस्य "शक्तिभाष्यम्" इत्यस्य प्रकाशनं हिन्दीभाष्य-सहितमेभिरस्मिन पत्रे प्रकाश्यते । सर्वैर्लोकैरधिकमेवं विषपत्रस्य सहयोगः करणीयः स्वयञ्च दिव्यता प्राप्या ऽस्माद् पत्रात् । तदेव सम्पादकस्य सेवाया उचितमूल्यदानं भविष्यति यदा खिल, लोकाः एवं विषपत्राणां साहाय्यमधि-काधिक ग्राहकताग्रहणेन करिष्यन्ति । दिव्यज्योतिः पत्रस्यास्य सफलतां कामयते ।

— सम्पादकः

# हि. प्र. राज्यप्रशासनम्

हिमाचल प्रदेश शिक्षाआयुक्तेन सचिवेन च साकं हि. प्र. संस्कृत शिक्षकपरिषदः सम्मेलनस्य वार्ता अस्माभिः पूर्वं पाठकानां समक्षे संस्थापिता आसीत। तत्र महत्त्वपूर्णनिर्णयाः गृहीताः आसन्। तस्मिन्नेव विषये ऽग्रिमसम्मेलनवार्ता अत्र दीयते येन संस्कृत-क्षेत्रे हिमाचल प्रदेशे क्रान्तिकारिपरिवर्तनं भविष्यति। एतत्सर्वं मान्यमुख्यमन्त्रिमहाभागानां श्री वीरभद्रसिंहा नाम् निदेशेनैव जायमानमस्ति। परन्तु अत्र संस्कृतज्ञैः सम्मिल्य सामयिकपरिस्थितीनामुपयोगः सार्वजनिकहिताय करणीयः स्वीया सांस्कृतिकपरम्परा च संरक्षणीया।

**Minutes of the Meeting Held with Sanskrit Shikshak Parishad on 17/7/1985 In The Office Room of Commissioner Cum-Secretary (Education)**

A meeting was held with Sanskrit Shikshak Parishad on 17-7-85 and various demands of the Parishad were discussed in which following were present :—

1. Shri N R, Pathak, Director of Education.
2. Smt. Krishna Tandon, Asstt Director Education.
3. Shri S. D. Mehta, Under secretary Education (B)
4. Shri Damodar Singh Thakur, under secretary (Education)
5. Shri Govind Ram Sharma, President Parishad.
6. Shri Prem Lal shastri, General secretary.
7. Shri Nag Dutt Dimry, President, Nahan.
8. Shri Sudhakar Acharya Secretary, Solan.
9. Shri Durga Dutt Shastri Secretary, Parishad.
10. Shri Sita Ram Shastri,
11. Shri Mast Ram Sharma.
12. Shri Gokul Chand Acharya
13. Shri Jagdish Prashad.

The demands of the Parishad were discussed and following decision were taken.

All existing 5 Sanskrit Pathshalas may be treated as Colleges for all intents and purposes.

1. Sanskrit Pathshala Sundernagar
2. ,, ,, Kiartu (Shimla)
3. ,, ,, Phagli (Shimla)
4. ,, ,, Nahan
5. ,, ,, Solan

Considering the low enrolment in Kiartu (Shimla District) vize 49 students, it was decided that Kiartu and Shimla Sanskrit Pathshalas should be merged togather. In addition, in Shimla district Sanskrit Pathshala Jangla and Sanskrit College Tungesh are also receiving grant-in-aid. It was felt that there was no necessity to continue with 4 sanskrit Colleges in Shimla district and therefore only one College is sufficient in Shimla District.

## STAFFING PATTERN

It was decided that in each Sanskrit College the following posts are necessary :—

| | | | | |
|---|---|---|---|---|
| 1. | Pracharya | ... | 1 | 1200-1900 |
| 2. | Sanskrit Acharyas | ... | 7 | 700-1600 |
| 3. | English Lect. | ... | 1 | 700-1600 |
| 4. | Lect. for Phy Edu | ... | 1 | 700-1600 |
| 5. | Librarian | ... | 1 | 700-1200 |
| 6. | Supdt. Grade-IY | ... | 1 | 620-1200 |
| 7. | Accountant | ... | 1 | 570-1080 |
| 8. | Clerks | ... | 2 | 400-600 |
| 9. | Peons | ... | 2 | 300-430 |
| 10 | Chowkidars | ... | 1 | 300-430 |
| 11. | Sweepers | ... | 1 | 300-430 |

The Director of Education was requested to submit proposals for creation of additional posts in all these sanskrit Colleges. Proposals should also include upgrading of 43 existing posts to the grade of staff of College cadre. Financial implication in the matter may also be worked out by Director of Education and intimated within a week. For the initial constitution of cadre of Acharyas, it was decided that a screening Committee be constituted to select these from the Acharyas in these Colleges For establishing initial cadre of Sanskrit Colleges, existing Acharyas be screened and suitable candidates recommended for alsorption as College Lecturers. If any existing staff member is not found suitable, he may be transferred to school cadre. New posts should be filled by direct recruitment through public service Commission and draft Recruitment and Promotion rules for principal (pracharya) and Acharyas (Lecturers) should be framed by Director of Education and forwarded to this Department within a period of two weeks The Recruitment & Promotion Rules for pracharyas (Principal) should contain the provision of 75% by promotion from Acharyas (Lecturers) and 25% by qualification be identical as in the case of pricipals other Colleges Recruitment and promotion Rules for Acharyas may be submitted by Director of Education within a month.

With regard to the Grant in aid to the Sanskrit and Hindi pathshalas it was decided that 95% deficit be made good by Govt. in case of Vashisht Vidyapeeth. Sanskrit College Tungesh, and Sanskrit College Jangla and Sanskrit College Doghi.

The meeting ended with a vote of thanks to the Chair.

S/-

Commissioner-cu-Secretary (Edu)
to the Govt. of H. P.

No. Shiksha-II-K 8 (4) - 5/85 Dated Shimla-02 26 July 1985

Copy forwarded to :—

1. The Director of Education Shimla—1
2. Assistant Director of Education, Shimla—1
3. So (Edu) 'B'
4. All concerned members who participated in the meeting.

Under Secretary (Edu) to the
Govt. of Himachal Pradesh Shimla.

## हि० प्र० संस्कृत परिषद: मान्यता

No. EDN—H (III) 5-22/84 (Loose File)
Directorate of Education,
Himachal Pradesh.

Dated Simla, The ..........
9 July 1985

To

All The District Education officer,
In Himachal Pradesh, State,

Subject :— Meeting with the H. P. Sanskrit Sikshek Parishad.

Himachal Pradesh Sanskrit Shikshak Parishad has desired that like other Union/Association. they may also be invited to discuss their problems with the authorites, Hence you are advised that Quarterly meeting may beheld with the H. P. Sanskrit Shikshak Parishad under intimation to this Directorate.

Director of Education
Himachal Pradesh

सम्पादकीयम्

# अ० भारतेनानुकरणीयः हि. प्र. राज्यप्रशासनस्य संस्कृतोत्थाननिर्णयः

## हि. प्र. संस्कृत शिक्षक परिषद्

संस्कृतस्य हि. प्रदेशे प्रसारविकासकृते ऽस्माभि – श्री आचार्य चरणानां निर्देश-कत्वे १९५६ तः सततं प्रयासाः क्रियन्ते इति तत्र भवन्तः सर्वेऽपि संस्कृतज्ञाः जानन्ति । श्री चरणास्तु परतन्त्रतायुगप्रभृति- अत्र सर्वतो भावेन संलग्नाः । विभिन्न संस्थामाध्यमेन या सेवा सुरभारत्याः सञ्जाताः साऽपि तिरोहिता नास्ति भवद्भ्य. । अत्र भवतामपि सहयोगोऽभूद् । १९८३ खीष्टाब्दस्यान्ते हि प्र. संस्कृत शिक्षक परिषदः- गठनं भारती विहारे श्री आचार्याणामध्यक्षतायां जातम् वर्षद्वयाभ्यन्तर एव संस्कृतस्य कृते प्रदेशे यत् कार्यं जातम् तद्धि निखिलभारतस्य कृतेऽनुकरणीयमस्ति नात्र कोऽपि सन्देहः । एतत्कृते प्रदेशमुख्यमन्त्रिणः श्री वीरभद्रसिंहाः समस्तसंस्कृतजगत्सकाशादस्माभिरभिनन्द्यन्ते । मत्पार्श्वे न सन्ति वाणी शब्दाः या यैरहंतत्रभवतः स्वागत व्याहरेयम् । भारतीय-संस्कृते रग्रदूतरूपेण श्रीमतां स्मरणं भारतीय इतिहासे सर्वदा भविष्यतीति निश्चप्रचम् । संस्कृत-परिषद् मुख्यमन्त्रिण' शुभाशीर्वादेन दिनानुदिनं समुन्नतिं कुर्वाणा परिलक्ष्यते । परिषदः कार्यकर्तारः— अस्माभिः शुभाशीर्वादेनाहर्निश संस्कृतसेवां कर्तुं – आदिश्यन्ते

## संस्कृतमहाविद्यालयाः

यद्यपि संस्कृतमहाविद्यालयाः–भारतीयसंस्कृतेः संस्कृतस्य च प्राणभूतास्तथापि-एतेषामितिहासः प्रदेशे न सुखद । एषु संस्कृतम्प्रति तावती एव उपेक्षा निराशावादो वा दृश्यते यावान् उत्साहः- असंस्कृतज्ञसमाजे दृश्यते । अध्यापकाः संस्कृतभाषणे लज्जन्ते छात्राः – संस्कृतोच्चारणक्षमतामपि न धारयन्ति । न चापि एतदर्थं केऽपि प्रयासास्तेषु समवलोक्यन्ते । अतो मया सविनयं प्रार्थ्यन्ते शासकीयसंस्कृतमहाविद्यालयप्राचार्याः प्राध्यापकाश्छात्राश्च यत्स्वीय संस्थानेषु संस्कृतवातावरणरक्षण कार्यम् । भवतां स्तरः— अन्यमहाविद्यालयेभ्य उच्चतम -इति भवद्भिः सर्वदा स्मरणीयम् । परं यदि केवलं अन्य-महाविद्यालयवातावरण अनुकरणं एव भवतां परिसरे स्यात्तदा तेन समाजस्य, संस्कृतस्य देशस्य प्रदेशस्य वा न किमपि हितं भविता । भवत्सु भारतीय संस्कृति रक्षाया महदुत्तर-दायित्वम् भवद्भिः सम्मिल्य तादृशा प्रयासाः विधेयाः येन एते संस्कृतमहाविद्यालयाः जन-आशाअनुरूपाः सिद्धाः स्युः । आशासे समस्तमहाविद्यालयाः ममाशयं गाम्भीर्येण आस्वन्ति- अत्र च विचारयिष्यन्ति ।

— केशव शर्मा

R. N. 6384/57 Registered No. L

# परिवार कल्याण: हमारा संकल्प

"हमारी जन-संख्या रूपी सुरसा का मुंह दिन प्रति दिन बढ़ता ही जा रहा है। यदि हमने बढ़ती आबादी के सुरसा के मुख को बढ़ने से न रोका तो अपना प्रदेश तो क्या, यहां तक कि विश्व भी इसके मुख में होगा।"

आप अपने सम्पर्क में आने वाले दम्पतियों को उनके कल्याणार्थ यह तथ्य बताएं और प्रदेश में एक नया स्वस्थ सुखी वातावरण बनाने में सहयोग दें।"

**वीर भद्र सिंह,**
मुख्यमन्त्री हिमाचल प्रदेश

# परिवार कल्याण: स्वेच्छा प्रेरणा पर निर्भर

"मेरा यह दृढ़ विश्वास है कि देश तथा प्रदेश की कोई भी योजना और समाज कल्याण का कार्य तब तक सिद्ध नहीं हो सकता जब तक कि परिवार कल्याण कार्यक्रम को लोग अपनी मर्जी के साथ नहीं अपनाते।"

**कौल सिंह**
राज्य स्वास्थ्य मंत्री,